qualities; still for the convenience of the meditation of their devotees, by their common consent, the Lord manifests all the manly qualities and Sri, the womanly qualities. But it does not mean that one does not possess the qualities found in the other. Though both are the Masters of the Universe and have no master over them, still out of their own free will, Sri is the Queen or Consort; and the Lord is prominent only to this extent that he is the 'Pati' (husband); and this agreement too they are having only for saving the souls of the devotees. The Lord is strict and severe, and the erring souls cannot approach Him directly for pardon. Then the soft-hearted Sri, the loving Mother that She is, intercedes on their behalf with Her Consort and thus they both together save the souls from sin and bondage. All this is based on the authority of the Vedas and Samhitas such as Svayambhuva, Mankana, Mahalakshmi, Dhanadiya, Satamakha, Kasyapa, Sattvata, Vasishtha, Saunaka, Parasara and Atri.

There are different schools of thought which hold views different from the above about Lakshmi: Lakshmi is no separate entity but only the Prakriti or Inanimate Matter that is being presided over and evolved by the Lord; She is nothing but the Ego, the Volition, the Power, the Knowledge or the Existence of the Lord; Lakshmi is only the feminine form assumed by the Lord at his will from his own body for his diversion. But all these are groundless as the Vedas clearly and unmistakably

declare that Lakshmi is a Cetana—a separate entity with the attributes of knowledge, bliss, power and the like; and that She is eternal like the Lord, Her consort.

Some grant that Lakshmi is a Cetana, but deny Her omnipresence, omniscience and omnipotence; they say She is atomic in size; some say She does not come under the category of Isvara, but is one of the souls; a few, Her greatness is not inherent, but bestowed on Her by the Lord for a time. Yet others say She forms a class by Herself being neither the Isvara, nor a Jiva. A few others hold that She is the Sovereign of all except the Isvara, while Narayana is the Sovereign of all including Herself. All these run counter to the clear dictates of the Vedas which must be our first and chief authority on these matters supported, of course, by Samhitas, Itihasas and Puranas. They declare that She is the Sovereign of all souls (ईश्वरीं सर्वभूतानां) as unconditionally as the Lord (ईश्वरः सर्वभूतानां); and so He is the Sovereign of all except Lakshmi as much as She is the Sovereign of all excepting Her Consort. The subordination of the one to the other is voluntary and optional, not obligatory. Her greatness is inherent, and not dependent on another. Though the two are the Paramount Sovereigns, the duality does not show itself as their opinions are always identical. One is the Mother of the Universe, while the other the Father. Thus the Divine Couple, Lakshmi and Narayana are the Para Brahman of the Upanishads

and both together are masters, creators, and saviours, and also the final goal of the Universe.

This is the conclusion arrived at by Ranganatha Muni, or Nanjiyar as he is popularly known, after a thorough and careful study of all authorities and of the works of the earlier Acaryas. He discusses all schools of thought which differ from this and refutes them with proper arguments based on the authority of the Scriptures. He has set down all this in this Bhashya.

## ANALYSIS OF THE BHASHYA.

In an introduction of about eighteen pages, he quotes extensively and explains all the Vedic hymns which deal with Lakshmi: two Sraddha Suktas, Medha Sukta, Aditi Suktas; and his verdict is that Lakshmi, like Narayana, has all the following qualities: She is the creator of the Universe; She is omnipotent and omniscient; by nature fundamentally opposed to all blemishes and the resort of all auspicious qualities. She again pervades, sustains, and rules the Universe; She is the object of worship in all sacrifices; and all the fruits of wealth, realisation of the Soul (Kaivalya), and the attainment of Moksha are under Her control and bestowed on the devotees by Her.

Then begins the Bhashya on the hymn. The word 'Jatavedah' which occurs in the first verse and also in four others is interpreted as Vishnu with an elaborate discussion containing

citations from numerous authorities such as Mahabharata and Vishnu Purana, Kasyapiya and Mankana Samhitas, Paramatma Sukta and Sariraka Sutras. Then the Bhashyakara proceeds with his Bhashya on the Riks and there are profuse quotations then and there from various authorities in support of his interpretations; and the reader is referred to the index for a detailed list of the same.

In the ninth verse where Lakshmi is referred to as the Sovereign (ईश्वरीं सर्वभूतानां), Nanjiyar has launched into an elaborate and long discussion--running to nearly twenty pages—on the concept of Lakshmi. In the course of it he raises many prima facie views, answers them categorically and concludes that names like Sraddha, and Vishnupatni refer to Lakshmi only: She is not subordinate to any one and is only the 'पत्नी' (Consort) of Narayana and not a 'दासी' (slave); both are engaged in the divine cosmic sacrifice of saving the souls and the one is essential for the other and cannot function or be without the other. Then he quotes in extenso many chapters of the Ahirbudhnya Samhita and Lakshmi Tantra in support of his view and winds up by saying that She is the equal of the Lord in all respects. 'The mastery of the Universe is one which inheres in both Lakshmi and Narayana.'

Then he completes his Bhashya on the remaining Riks and concludes the work mentioning his name and that of the master from whom he learnt all those things about Lakshmi.

## CONCLUSION.

I need not dilate upon the merits of the Bhashya, but the intelligent reader can see for himself that it is perfect not only as a commentary, but as a piece of polemics and a type of beautiful literature also. I consider myself extremely fortunate that I have been chosen as the instrument for unearthing and publishing this rare work and I owe all this privilege and fortune to my Guru Sri. Sri Saumya Narayana Acarya of Tirukkottiyur. My respectful homage and salutations to him and to Goddess Lakshmi, the Mother of the Universe and of my humble self.

Pudukotah,
17—7—37.

A. SRINIVASA RAGHAVAN

---

# शुद्धाशुद्धपत्रिका

| अशुद्धं | शुद्धं |
|---|---|
| ५ 22 तै. उ. | नारायणोपनिषत् |
| ५० 12 विग्रहविशुष्ट | विग्रहविशिष्ट |
| ९० 17 चन्द्रीं | चन्द्रां |
| १३४ 15 bosom | bosoms |
| १३८ 14 towards | against |
| 24 6 सर्यपालिनी | सर्वपालिनी |
| 7 नम | नमः |
| 31 22 लक्षमणा | लक्ष्मणा |

# सङ्केतविवरणम्

अथर्व.—अथर्वशिखोपनिषत्
अष्टा.—अष्टाध्यायी
अष्टा. ब्र.—अष्टाक्षरब्रह्मविद्या
अहि. सं.—अहिर्बुद्ध्न्यसंहिता
इति. समु.—इतिहाससमुच्चयः
कठ.—कठोपनिषत्
छा.—छान्दोग्योपनिषत्
तै. (यजु).सं—तैत्तिरीयसंहिता
,, ब्रा. ,, ब्राह्मणं
,, का. ,, काठकं
,, आर. ,, आरण्यकं
तै. उ.—तैत्तिरीयोपनिषत्
बृ.—बृहदारण्यकोपनिषत्
भार. आनु.—भारते आनुशासनिकपर्व
,, आश्व.—आश्वमेधिकपर्व
,, उद्यो.—उद्योगपर्व
,, वन.—वनपर्व
,, शा.—शान्तिपर्व
महोप.—महोपनिषत्
मु.—मुण्डकोपनिषत्

रा.—रामायणं
,, अ.—अयोध्याकाण्डः
,, आ.—आरण्यकाण्डः
,, बा.—बालकाण्डः
,, यु.—युद्धकाण्डः
,, सु.—सुन्दरकाण्डः
लैङ्ग.—लैङ्गपुराणम्
वाजस.—वाजसनेयब्राह्मणं
वि. पु.—विष्णुपुराणम्
विष्व. सं—विष्वक्सेनसंहिता
वे.सं.—वेदार्थसंग्रहः
शरणा. ग.—शरणागतिगद्यं
शा. सू.—शारीरकसूत्राणि
श्रीगुण.—श्रीगुणरत्नकोशः
श्वे.—श्वेताश्वतरोपनिषत्
सनत्.सं.—सनत्कुमारसंहिता
सुबाल.—सुबालोपनिषत्
स्वायं.—स्वायम्भुवसंहिता

॥ श्रियै नमः ॥

# ॥ श्रीसूक्तभाष्यम् ॥

श्रीपराशरभट्टार्यः श्रीरङ्गेशपुरोहितः ।
श्रीवत्सांकसुतः श्रीमान् श्रेयसे मेऽस्तु भूयसे ॥

यामाहुः श्रुतयः सर्वाः पुंप्रधानेश्वरेश्वरीम् ।
अशेषलोकजननी लक्ष्मीर्मामभिवीक्षताम् ॥

यत्पदांभोजघटिता प्रणतिर्दुर्लभान्यपि ।
पदानि परमां मुक्तिं सूते तां श्रियमाश्रये ॥

श्रियः सूक्तं समुदितं यज्जपो मंगलावहः ।
अशरण्यशरण्यं तद्व्याकुर्मो भोगमोक्षदम् ॥

परस्य ब्रह्मणस्तत्वं* यदधीनमधीमहे ।
सा श्रीः स्वरूपरूपाद्यैः सहात्र प्रतिपाद्यते ॥

यदीयनित्यनिर्दोषकल्याणगुणसंहतिः ।
श्रुतिस्मृतिषु शास्त्रेषु दिव्येषु समुदीर्यते ॥

तत्र तावच्छ्रुतयः—**श्रद्धासूक्ते**[1] ।

"श्रद्धया देवो देवत्वमश्नुते । श्रद्धा प्रतिष्ठा लोकस्य देवी ।
सा नो जुषाणोपयज्ञमागात् । कामवत्साऽमृतं दुहाना ॥१॥

---

*रूपम्–पा. [1] यजु. काठक. ३. ३. ९–१२.

श्रद्धा देवी प्रथमजा ऋतस्य । विश्वस्य भर्त्री जगतः प्रतिष्ठा ।
तां श्रद्धां हविषा यजामहे । सा नो लोकममृतं दधातु ।
ईशाना देवी भुवनस्याधिपत्नी ॥२॥

अत्र द्वितीया ऋक् पञ्चपदा । तस्मिन्मन्त्रद्वये लक्ष्म्याः स्वरूपरूपगुणविभवादि सकलवेदवेदान्तसारभूतमाबालपण्डितं प्रसिद्धतरं प्रतिपाद्यते ।

तत्र प्रथमेन मन्त्रेण सर्वेश्वरस्य सर्वेश्वरत्वं तद्विभूतेरपि विभूतित्वं लक्ष्म्यायत्तमिति प्रतिपाद्यते ।

['श्रद्धया देव इत्यादि'] [देवः]-निरुपाधिकद्योतनादिकल्याणगुणविशिष्टः सर्वेश्वरः । [देवत्वं]-ईश्वरत्वं । [श्रद्धया]-श्रद्धापरपर्यायया देव्या श्रिया । [समश्नुते]-प्राप्नोति । तथा वैष्णवे पुराणे

[1]'मेधा श्रद्धा सरस्वती,' [2]'अस्येशाना जगतो विष्णुपत्नी'।
[3]'सुमज्जानये विष्णवे ददाशति' इति श्रुत्यन्तरम् ।
[4]'अनन्या राघवेणाहम्'; [5]'काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्'; [6]'अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा'; [7]'यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम' इति ॥

---

[1] वि. पु. १. ९. ११९.
[2] यजु. सं. ४. प्र.४-१२.
[3] यजु. अष्ट. २. प्र. ४. २९. ४.
[4] रा. सु. २१-१६.
[5] रा. बा. ४-७.
[6] रा. आ. ३७-१८.
[7] वि. पु. १-८-१७.

[श्रद्धा प्रतिष्ठा लोकस्य देवी]. लोक्यत इति लोकः-असद्व्या-वृत्तं प्रमाणप्रतिपन्नं वस्तुजातं; असद्व्यावर्तकस्य चेतनाचेतनात्म-कस्य सर्वस्य प्रपञ्चस्य। [देवी]-जगदुत्पत्तिस्थितिलयादिना क्रीडन्ती। [श्रद्धा]-साक्षाल्लक्ष्मीः। [प्रतिष्ठा]-प्रतितिष्ठत्यस्यामिति प्रतिष्ठा-आधार-भूता।[1]"आतश्चोपसर्ग" इति अङ्। अथवा अस्य सर्वस्य लोकस्य धारण-पोषणभोग्यप्रदानेन स्थापयित्री। तथा, [2]'विष्टंभो दिवो धरुणः पृथि-व्याः,' [3]'अलमेषा परित्रातुं,' [4]'अभियाचाम वैदेहीमि'त्यादि। [सा नो जुषाणोपयज्ञमागात्] एवंभूता[सा]श्रीः। [नः]-अस्माकं, देवी-समाराधनाय समुद्युक्तानां [यज्ञं] आनुपूर्व्या विधीयमानं स्वप्रीणनम्। [जुषाणा] प्रीयमाणा। [उपागात्] उपगच्छतु। [5]'छन्दसि लुङ्लो-टा'विति लोटो लुङ्। किंविशिष्टा [कामवत्साऽमृतं दुहाना] यस्य यस्य यो यः कामः तस्य तस्य तेन तेन कामेन वत्सभूतेन वत्सला धेनुः वत्सस्य पय इव [अमृतं दुहाना] क्षरन्ती, बहुस्नुतीरिति यावत्। तथा [6]'प्रणिपातप्रसन्ना हि,' [7]'स श्लाघ्यस्स गुणी धन्य' इत्यादि॥

द्वितीयेन मन्त्रेण इष्टापूर्तादिसर्वकर्मसमाराध्यत्वं तेषां फल-प्रदातृत्वं च लक्ष्म्याः समर्थ्यते।

[श्रद्धा देवीत्यादि] [ऋतस्य]- सुकृतस्य कर्मणः [प्रथमजा]-[8]'जनसनखने'त्यादिना विट्। [9]'विड्वनोरनुनासिकस्याऽऽत्' इति

---

[1] अष्टाध्यायी-३-३-१०६. [2] (नीलासूक्ते) तै ४-४-१२-५७. [3] रा. सु.-२७-४५. [4] रा. सु. २७-४२. [5] अष्टा. ३-४-६. [6] रा. सु. २७-४४. [7] वि. पु. १-९-१३१. [8] अष्टाध्या. ३-२-६७. [9] अष्टाध्या, ६-४-४१.

आत्त्वम् । समाराध्यत्वेन पूर्वं सन्निहिता [विश्वस्य भर्त्री] [विश्वस्य]-स्थावरजंगमात्मकस्य प्रपञ्चस्य पोषयित्री । [जगतःप्रतिष्ठा] [जगतः]-जङ्गमस्य देवतिर्यङ्मनुष्यात्मकभूतजातस्याधारभूता । कर्मफलभूतेन वृष्ट्यादिना जगन्निर्वाहिका [1]"ततोऽवलोकिता देवा" इत्यादि। [तां श्रद्धां हविषा यजामहे] उक्तगुणविशिष्टां [तां][श्रद्धां]-सर्वेश्वरीं। [हविषा यजामहे] [हविषा]-तस्याः प्रीत्यर्थं प्रदेयेन पत्रपुष्पादिना चरुपुरोडाशादिना वा, आत्मात्मीयेन वा । [यजामहे] समाराधयामः । [सा नो लोकमित्यादि] [सा]-एवमस्मत्समाराधिता । [नः]-समाराधकेभ्यः । [अमृतं लोकं]- नित्यसिद्धं विष्णोः परमं पदं । [दधातु]-ददातु । तथा परमपदविषये- [2]"अत्यर्कानलदीप्तं तत्स्थानं विष्णोर्महात्मनः," इत्यारण्यपर्वणि आर्ष्टिषेणप्रतिपादितम् परमपदविषयवचनं सर्वमत्र लेख्यम् । [3]"त्वं सिद्धिस्त्वं स्वधा स्वाहे"त्यादि, [4]"विमुक्तिफलदायिनी" इत्यन्तं पुराणवचनं सर्वमत्र लेख्यम् ।

[ईशाना देवी भुवनस्याधिपत्नी] [भुवनस्य]-चिदचिदात्मकस्य कृत्स्नस्य प्रपंचस्य । [ईशाना]-स्वभावतो नियन्त्री ; अनन्याधीनेश्वरीत्यर्थः । [5]'ताच्छील्ये चानश्'। [अधिपत्नी] अधि-अधिकस्य पत्युः

---

[1] वि. पु. १-९-१०६.   [2] भा. व.

[3] वि. पु. १-९-११९. त्वं सिद्धिस्त्वं स्वधा स्वाहा सुधा त्वं लोकपावनी ।
सन्ध्या रात्रिः प्रभा भूतिर्मेधा श्रद्धा सरस्वती ॥

[4] ,, १-९-१२०. यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।
आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ॥

[5] अष्टा. ३-२-१२९.

भगवतः पत्नी । [1]'पत्युर्नो यज्ञसंयोगे' इति पाणिनिः । आश्रित-संरक्षणयज्ञे सहधर्मचारिणी; सृष्ट्यादीनामप्युपलक्षणम् । तथा चोभय-संकल्पायत्ता जगन्निर्माणादिलीलेति भावः ॥

अन्यदपि **श्रद्धासूक्तम्** — [2]'श्रद्धयाऽग्निस्समिध्यत' इत्यादि 'हविषा वर्धयामसि' इत्यन्तम् ॥

तत्र श्रद्धासूक्ते 'श्रद्धां देवा यजमानः' इत्यादिना सर्वदेवो-पास्यत्वमवगतम् । 'देव' इति मनुष्याणामुपलक्षणम् ।

'श्रद्धां प्रातर्हवामहे' इत्यादिना सन्ध्यात्रयोपास्यत्वम् । 'श्रद्धा देवानधिवस्त' इत्यनेन सर्वदेवान्तर्यामित्वं; 'श्रद्धा विश्वमिदं जगत्' इत्य नेन सामानाधिकरण्यव्यपदेशेन शरीरात्मभावश्च सिद्धः । यथा [3]'नारा-यण एवेदं सर्व' मिति भगवतः । [4] 'सर्वं खल्विदं ब्रह्म' इति सामा-

---

[1] अष्टा. ४-१-३३.

[2] यजु. अष्ट. २-प्रश्न. ८ अनु.८, ६४-६६.

श्रद्धयाऽग्निः समिध्यते श्रद्धया विन्दते हविः । श्रद्धां भगस्य मूर्धनि वचसाऽऽ-वेदयामसि । प्रियं श्रद्धे ददतः । प्रियं श्रद्धे दिदासतः । प्रियं भोजेषु यज्वसु इदं म उदितं कृधि । यथा देवा असुरेषु श्रद्धामुग्रेषु चक्रिरे ॥ एवं भोजेषु यज्वसु अस्माकमुदितं कृधि । श्रद्धां देवा यजमानाः वायुगोपा उपासते। श्रद्धां हृदय्ययाऽऽकूत्या श्रद्धया हूयते हविः । श्रद्धां प्रातर्हवामहे श्रद्धां मध्य-न्दिनं परि । श्रद्धां सूर्यस्य निम्रुचि श्रद्धे श्रद्धापयेहमा । श्रद्धा देवानधिवस्ते श्रद्धा विश्वमिदं जगत् । श्रद्धां कामस्य मातरं हविषा वर्धयामसि ॥

[3] तै. उ.२-११. [4] छा. ३-१४-१.

नाधिकरण्यव्यपदेशस्तूभयसाधारणः । 'श्रद्धां कामस्य मातरमि'त्यनेन सर्वफलदातृत्वमवगतम् । एवं भूतां श्रद्धामुपास्महे ॥

**मेधासूक्तेऽपि**

[1] मेधा देवी जुषमाणा न आगात् । विश्वाची भद्रा सुमनस्यमाना ।
त्वया जुष्टा जुषमाणा दुरुक्तान् । बृहद्वदेम विदथे सुवीराः ॥१॥
त्वया जुष्ट ऋषिर्भवति । देवि त्वया ब्रह्माऽऽगतश्रीरुत त्वया ।
त्वया जुष्टश्चित्रं विन्दते वसु । सा नो जुषस्व द्रविणेन मेधे ॥२॥

अस्मिन्मन्त्रद्वये देव्यास्सर्वव्यापित्वं, सर्वसमाराध्यत्वं, सर्वापेक्षितफलप्रदातृत्वं च सुस्पष्टमुच्यते ।

मेधा देवीत्यादि—अध्यवसायिन्या बुद्धेर्निर्वाहिका [मेधा] । [देवी]-जगन्निर्माणनर्मरसिका । [नः]-तत्सेवारसिकानां अस्माकम् । [जुषमाणा] भक्तप्रिया । आगात्-अस्मद्यागं, [आगात् ]-आगच्छतु । [विश्वाची] विश्वं भूतजातं अञ्जसा अञ्चन्ती व्याप्य नियच्छन्ती । लुप्तनकारादञ्चतेर्ङीप् । 'अन्चु गतिपूजनयो'रिति धातुना विश्वगता, विश्वपूज्या च । उक्तं च भगवता पराशरेण [2]'यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम' इति । [3]'त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरं' इति च । [भद्रा]-भजनीया; सर्वमंगळावहा । [सुमनस्यमाना]सुमनोभावमात्मन इच्छन्तीति क्यच् । क्यजन्तात् [4]"ताच्छील्ये चानश्' । तस्याः

---

[1] तै. उ. २-३७.
[2] वि. पु. १-८-१७.
[3] वि. पु. १-९-१२६.
[4] अष्टा. ३-२-१२९.

सुमनस्त्वे [1]'पापानां वा शुभानां वा ........ न कश्चिन्नापराध्यति' ॥ आगतां तां त्वंकृत्य ब्रवीति। त्वत्कटाक्षात्पूर्वं [दुरुक्तान्]-दुरुक्तानि वचनलक्षणरहितानि वाक्यानि। [जुषमाणाः]-सेवमाना वयं; इदानीं [त्वया] [जुष्टाः]-प्रीतिपूर्वकं समीक्षिताः। त्वत्कटाक्षपातेन [विदथे]-विज्ञाने सति, महान्तः विद्वद्गोष्ठीषु [सुवीराः]-वीर्यवन्तः। [बृहत्], महत्पूजितं वचः; [वदेम] अभिदधीमहि। अनेन मन्त्रेण लक्ष्मीकटाक्षाधीनं वाग्विलासादिकमिति दर्शितम् ॥

अथ द्वितीयः—'त्वया जुष्ट' इत्यादि। हे देवि, [त्वया जुष्टः] यः कश्चिदकिंचनोऽपि [ऋषिर्भवति]-मन्त्रद्रष्टा भवति। किं च त्वया जुष्टः ब्रह्मा भवति-बृहत्त्वगुणयोगी भवतीति यावत्। ब्रह्म वा भवति। [2]'निरञ्जनः परमं साम्यमुपैति' इति प्रक्रियया। ब्रह्मसदृशो भवति। किं च त्वत्कटाक्षतः गतश्रीरप्यागतश्रीर्भवति। [उत] अप्यर्थे। किं च त्वया जुष्टः, [चित्रं]-विस्मयनीयं, [वसु]-समृद्धधनं; [विन्दते]-लभते। एवं भूता सा त्वं [अस्मान्] त्वां प्रपन्नान्; [द्रविणेन] सर्वसमृद्धया सह [जुषस्व]-सेवस्व। हे [मेधे] हे लक्ष्मीरिति योजना। अनेन मन्त्रेण सर्वस्य ज्ञानधनमहत्त्वादिकं त्वदधीनमित्युक्तम् ॥

**अदितिसूक्तेषु**— [3]'अदितिर्द्यौरदितिरन्तरिक्षम्। अदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजनाः। अदितिर्जातमदितिर्ज

---

[1] रा. यु. ११६-४४.
[2] मुण्डक. उ. ३-१-३.
[3] यजु. आर. प्र. १-१३-४.

नित्वं ।' 'अष्टौ पुत्रासो अदितेः' इत्यत्र अदितिशब्देन साक्षाल्लक्ष्मीः तद्विभूतिभूता भूमिर्वोच्यते ।

अदितिः-अखण्डनीयस्वरूपगुणविभवा अदितिः । 'दो अवखण्डने' । दितिर्नेत्यदितिः । [1]'द्यतिस्यती'त्यादिना इकारः । अनेन मन्त्रेण तस्याः सर्वात्मकत्वमुच्यते ।

'अदितिः पञ्चजना' इति पञ्चजनाश्चादितिविभूतिभूताः । के पुनस्ते? प्राणश्चक्षुःश्रोत्रान्नमनांसि । तथा वाजसनेयब्राह्मणे [2]'प्राणस्य प्राणं चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो मन इति' एते पञ्चजना अदित्यधीना इति यावत् । अदितिर्जातं-उत्पन्नम् । अदितिर्जनित्वं-जनुषो लक्षणं; जनिष्यमाणमिति यावत् ।

[3]''अदितिर्देवा गन्धर्वा'' इत्यादिकमनुवाकमदितिविभूतिप्रतिपादकमत्र लेख्यम् ।

[4]'अदितिर्न उरुष्यतु' इत्यादिसूक्तेऽपि तन्माहात्म्यं सुसिक्षम् । अन्यत्र लक्ष्मीमाहात्म्यपराणि वाक्यानि बहूनि दृश्यन्ते । [5]'अस्येशाना जगतो विष्णुपत्नी,' [6]'महीं देवीं विष्णुपत्नीमजूर्यां' [7]'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ,' [8]'सुमज्जानये विष्णवे ददाशती'ति ।

---

1 अष्टा. ७-४-४०.
2 वाजसे. ब्रा.
3 तै. उ.
4 तै. का. १ प्र. ५-५१.
5 यजु. सं. ४. प्र. ४-१२.
6 य. अष्ट. ३. अनु. २-१८-१.
7 तै. आ. ३-१३-४१.
8 य. अष्ट. २-४-२९-४.

वाक्सूक्तं पृथिवीसूक्तमित्यादिकमपि अत्र द्रष्टव्यम्। वाक्सूक्ते तु विशेषः [1]'मेधा श्रद्धा सरस्वती' इति सरस्वतीशब्दस्य लक्ष्मीनामत्वेन परिगणनात् तत्पर्यायवाक्छब्दवाच्याया लक्ष्म्या [2]'अनन्तामन्तादि'त्यनेन देशतः कालतो वस्तुतः परिच्छेदरहितत्वं। [3]'वाचं देवा उपजीवन्ति' इत्यादिना देवादिसर्वचेतनोपजीव्यत्वम्। [4]'वाचीमा विश्वे' त्यनेन सकलभुवनाधारत्वम्। '[इन्द्रपत्नी]'त्यनेन 'इदि परमैश्वर्ये' इति धातूत्पन्नेन्द्रशब्दवाच्यपरमैश्वर्यविशिष्टविष्णुपत्नीत्वम्। '[अमृतस्य नाभि]'रित्यनेन मुक्त्युपायत्वम्। '[अवन्ती देवी]'त्यनेन सर्वरक्षकत्वम्। '[यामृषय]'इत्यादिना सर्वोपास्यत्वं च सुस्पष्टमवगतम्।

भूसूक्तेऽपि तद्विभूतिभूतभूमिप्रतिपादके [5]'[इन्द्रपत्नी व्यापिनी]' इति सर्वव्यापित्वं भूम्या अवगतम्। तत् गुणतो व्याप्तिपरं :

[6]"तथा भूमिश्च नीला च शेषभूते मते मम।
स्वरूपतस्तु न तयोर्गुणतो व्याप्तिरिष्यते॥" इति

स्वरूपतो व्याप्तिप्रतिषेधात्, गुणतो व्याप्तिप्रतिपादनाच्च अनन्यथासिद्धैतद्वचनोपबृंहितस्वरूपतो व्याप्तिप्रतिषेधपरैकायनश्रुत्यैककण्ठ्यावश्यंभावाच्च। यद्यपि तैत्तिरीयके [1]'उद्धृताऽसि वराहेण'इत्यादिके भूविषये वाक्ये

---

[1] वि. पु. १-९-११९.
[2] य. अष्ट. २-८-६२-४.
[3] ,, ,, २-८-६२-७.
[4] ,, ,, २-८-६३ : १-३.
[5] भूसूक्ते.
[6]
[7] तै. उ. २.

[1] 'ईश्वरीं सर्वभूतानां' इति सर्वभूतेश्वरत्वमवगतं, तथाऽपि जीवकोटित्वेन प्रमाणसिद्धायाः भूम्याः सर्वभूतेश्वरत्ववचनं तदन्तर्यामिलक्ष्मीपरत्वेन योज्यम् । वराहोद्धृतत्वं तत्परमेव । एतेषां सर्वेषामुपबृंहणानि वैष्णवब्राह्मभगवच्छास्त्रवचनानि ॥

तथा हि—मैत्रेयेण पृष्टो भगवान् पराशरः वैष्णवे पुराणे लक्ष्मीस्वरूपविभूत्यादिकं स्पष्टमध्यायद्वयेन प्रतिपादितवान् । तत्र प्रथमेऽष्टमेऽध्याये मैत्रेयः

[2]"क्षीरोदाच्छ्रीः समुत्पन्ना श्रूयतेऽमृतमन्थने ।
भृगोः ख्यात्यां समुत्पन्नेत्येतदाह कथं भवान् ॥"

पराशरः [3] "नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी" इत्यारभ्य

[4]"देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः ।
स्त्रीनाम्नी लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम्" इत्यन्तं लेख्यम् ।

अनेनाध्यायेन सर्वेषां तत्वानां भगवानिव लक्ष्मीरपि व्यापनभरणनियमनात्मशरीरभावादिना सर्वेषामियं स्वामिनी, तानि सर्वाण्यस्याश्शेष इति सुस्पष्टमुदितम् ॥

अनन्तरेणाध्यायेन लक्ष्मीमाहात्म्यादिकं केनचिदितिहासेन प्रपञ्चितम् ।

---

[1] तै. उ. २.
[2] वि. पु. १-८-१६.
[3] वि. पु. १-८-१७.
[4] ,, ,, १-८-३५ (See appendix.)

श्रीपराशरः :—[1]"इदं च शृणु मैत्रेय यत्पृष्टोऽहमिह त्वया ।
श्रीसंबन्धं मयाप्येतच्छ्रुतमासीन्मरीचितः ॥"

इत्यारभ्य, [2]"वसति न तेषु कदाचिदप्यलक्ष्मीः" इत्यन्तं सर्वं लेख्यम् ॥

अस्मिन्नध्याये साक्षात्सर्वेश्वरस्य परमात्मपरब्रह्मादिशब्दवाच्यस्य नारायणस्यैव श्रद्धाविष्णुपत्नीश्रीशब्दवाच्यायाः सर्वेश्वर्याः सर्वात्मभूतायाः साक्षाल्लक्ष्म्याः अपि व्यापनभरणनियमनस्वाम्यादिकं अनन्तगरुडविष्वक्सेनादिनित्यसूरिविरिञ्चेशशतमखाद्यखिलसुरासुरमनुजसिद्धगन्धर्वादिस्तुतत्वं, तत्समाराध्यत्वं, अखिलहेयप्रत्यनीकत्वं, कल्याणैकतानत्वं, सर्वलोकस्य तत्कटाक्षलवसमुल्लसितत्वं, तस्य सर्वस्य तदभावमात्रविनाशित्वं, यज्ञदानतपःप्रभृतीनां धर्माणां तन्निदानभूतस्य सत्यस्य च तत्कार्यभूतशुद्धिसमृद्धिबुद्धिप्रभृतीनामपि तत्कटाक्षायत्तत्वं, सकलस्य चेतनस्य तेनैव भोगमोक्षरूपनिखिलपुरुषार्थलाभित्वं, अशरण्यशरण्यत्वमित्युक्तार्थजातं तदसाधारणमनन्यगोचरं प्रतिपादयता वसिष्ठपुलस्त्यवरप्रदानप्रसादीकृतदेवतापारमार्थ्यज्ञानेन श्रीविष्णुपुराणसन्दर्शितसर्वभोगापवर्गतदुपायरूपपरमरहस्येन भगवतः पाराशर्यस्य पितृत्वेन सर्वोपनिषत्सु घुष्यमाणेन साक्षाद्वसिष्ठपौत्रेण सकललोकपितामहचतुर्मुखनप्त्रा ब्रह्मविदग्रेसरशुकपितामहेन ब्रह्मविन्मैत्रेयाचार्येण भगवता पराशरेण 'श्रीरेव सर्वेश्वरी' इति श्रुतीनामुपबृंहणं बहुभिस्तात्पर्यलिंगैः सुदृढय्य समुद्भावितम् ।

---

[1] वि. पु. १-९-१ (See appendix). [2] वि. पु. १-९-१४९.

एवमादिमे **ब्राह्मपुराणे** भगवान् हिरण्यगर्भः क्षीराब्धौ भगवन्तमभिगम्य "जितं ते" इत्यादिना स्तुत्वा, पृच्छति स्म—

**ब्रह्मोवाच**—"चतुर्दशविधस्यास्य भूतसर्गस्य केशव ।
परित्राणाय मे ब्रूहि रहस्यं परमाद्भुतम् ॥
दारिद्र्यनाशनं धर्म्यं मनोज्ञं पापनाशनं ।
सर्वेश्वर महाबुद्धे स्वरूपं वैभवं महत् ॥
श्रियस्सर्वातिशायिन्यास्तथा ज्ञानं च शाश्वतम् ।
नामानि चैव मुख्यानि यानि गौणानि चाच्युत ॥
त्वद्वक्त्रकमलोत्थानि श्रोतुमिच्छामि तत्वतः ।"

इति ब्रह्मणा पृष्टो भगवानाह :—

इति तस्य वचः श्रुत्वा प्रत्युवाच जगत्पतिः ।
महाविभूतेस्संपूर्णा षाड्गुण्यवपुषः प्रभोः ॥
मम सर्वात्मभूतस्य नित्यैवैषाऽनपायिनी ।
एकैव वर्तते भिन्ना ज्योत्स्नेव हिमदीधितेः ॥
सर्वशक्त्यात्मिका चैव विश्वं व्याप्य व्यवस्थिता ।
सर्वैश्वर्यगुणोपेता नित्यं तद्धर्मधर्मिणी ॥
प्राणशक्तिः परा ह्येषा सर्वेषां प्राणिनां भुवि ।
शक्तीनां चाऽपि सर्वासां योनिभूता परा कला ॥
हन्त तस्याः परं नाम्नां सहस्रमिदमुत्तमम् ।
शृणुष्वावहितो भूत्वा परमैश्वर्यभूतिदम् ॥

समस्तपापार्तिहरं सकलेष्टप्रदं सदा ।
देव्यास्संस्मृतिमात्रेण दारिद्र्यं याति भस्मसात् ॥
तथाऽष्टगुणमैश्वर्यं ददाति पठतां नृणाम् ।"

इति सर्वेश्वर्याः व्यापनभरणनियमनस्वाम्यादिकापरिमेयमाहात्म्यप्रमाणानि प्रपञ्चय, तन्नामानि स्वरूपरूपगुणविभूतिमाहात्म्यप्रतिपादकानि पठतां जपतां सर्वमङ्गलावहानि भोगमोक्षप्रदानि सहस्रनामानि व्यपदिश्यन्ते—

"इति नाम्नां सहस्रं तु लक्ष्म्याः प्रोक्तं शुभावहम् ।
परावरेण भेदेन गौणमुख्यविभागतः ॥
यश्चैतं कीर्तयेन्नित्यं शृणुयाद्वाऽपि पद्मज ।
शुचिस्समाहितो भूत्वा भक्तिश्रद्धासमन्वितः ॥
ऐहिकामुष्मिकां सिद्धिं लभते श्रीप्रसादतः ।
दारिद्र्यं नश्यते तस्य सर्वपापात् प्रमुच्यते ॥"

**सनत्कुमारसंहितायां** सनत्कुमारः—

श्रीनिवासं समभ्यर्च्य पुष्पधूपानुलेपनैः ।
भोज्यैश्च मधुपर्काद्यैः यथाशक्त्या जगद्गुरुम् ॥
तत्पार्श्वस्थां श्रियं देवीं संपूज्य श्रीधरप्रियाम् ।
ततो नामसहस्रेण तोषयेत् परमेश्वरीम् ॥
नामरत्नावलीस्तोत्रमिदं यस्सततं पठेत् ।
प्रसादाभिमुखी लक्ष्मीः सर्वमस्मै प्रयच्छति ॥

यस्माल्लक्ष्म्यंशसंभूताः शक्तयो विश्वगाः सदा ।
कारणत्वेन तिष्ठन्ति जगत्यस्मिंस्तदाश्रयाः ॥
तस्मात्प्रीता जगन्माता श्रीर्यस्याच्युतवल्लभा ।
साध्यायशक्तयस्तस्य सिद्धिमिष्टां दिशन्ति च ॥
एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः ।
तदंशाः शक्तिमन्तोऽन्ये ब्रह्मेशानादयो यथा ॥
तथैवैका परा शक्तिः श्रीस्तस्य करुणाश्रया ।
ज्ञानादिषाड्गुण्यमयी या प्रोक्ता प्रकृतिः परा ॥
एकैव शक्तिः श्रीस्तस्य द्वितीया परिवर्तते ।
परावरेण रूपेण सर्वाकारात्ममानिनी ॥
अनन्तनामधेया च शक्तिचक्रस्य नायिका ।
जगच्चराचरमिदं विश्वं व्याप्य व्यवस्थिता ॥
तस्मादेकैव परमा श्रीर्ज्ञेया विश्वरूपिणी ।
सौम्या सौम्येन रूपेण संस्थिता वटबीजवत् ॥
यो यो जगति पुंभावः स विष्णुरिति निश्चयः ।
यो यस्तु नारीभावः स्यात्तत्र लक्ष्मीर्व्यवस्थिता ॥
प्रकृतेः पुरुषाच्चान्यस्तृतीयो नैव विद्यते ।
अथ किं बहुनोक्तेन नरनारीमयो हरिः ॥
अनेकभेदभिन्नस्तु क्रीडते परमेश्वरः ।
महाविभूतिदयितां ये स्तुवन्त्यच्युतप्रियाम् ॥

ते प्राप्नुवन्ति परमां लक्ष्मीं संशुद्धचेतसः ।
पद्मयोनिरिदं प्राप्य पठन् सूक्तं ततः क्रमात् ॥
दिव्यं चाष्टगुणैश्वर्यं तत्प्रसादाच्च लब्धवान् ॥" इति ॥

अत्राऽपि तस्य स्वरूपरूपगुणविभवादिकं शक्तिचक्रनायिकात्वं, भगवतः सर्वेश्वरस्येव सर्वव्यापनभरणनियमनादिकं सुस्पष्टं प्रपंच्योपसंहृतम् । श्रीमद्वैष्णवपुराणवदत्राप्यस्मदपेक्षितं सुभिक्षम् ॥

**लैंगे क्षुपस्तोत्रे**—"प्रजया तस्य सन्तुष्टो भगवान्पुरुषोत्तमः ।
श्रीभूमिसहितः श्रीमान् शंखचक्रगदाधरः ॥"

अत्रापि लक्ष्मीनारायणयोरपरिमेयमाहात्म्यं सुप्रसिद्धम् ॥

**श्रीविष्णुस्मृतौ** श्रियं प्रति वसुधावचनम् —

"आक्रम्य सर्वां तु यथा त्रिलोकीं तिष्ठत्ययं देववरोऽसिताक्षि* ।
तथा स्थिता त्वं वरदे तथाऽपि पृच्छाम्यहं ते वसतिं विभूत्याः॥"[1]

**श्रीरुवाच** :—

"सदा हिताऽहं मधुसूदनस्य देवस्य पार्श्वे तपनीयवर्णा ।
†अस्मि स्थिता यं मनसा स्मरामि श्रिया युक्तं तं प्रवदन्ति सन्तः॥"[2]

**स्वायंभुवे** :—"सर्वकामप्रदां रम्यां संसारार्णवतारिणीम् ।
क्षिप्रप्रसादिनीं लक्ष्मीं शरण्यामनुचिन्तयेत् ॥"

अत्रापि भोगमोक्षप्रदातृत्वेन तत्साधनत्वं च देव्याः प्रतिपादितम् । एवमन्यत्र सर्वश्रुतिस्मृतीतिहासपुराणेषु सर्वेश्वरस्य श्रियःपतेः पुरुषो-

---

[1] वि. स्मृ. ९८. ६. [2] वि. स्मृ. ९८. ८. * असिताङ्गे – पा.
† अस्याज्ञया यं मनसा स्मरामि श्रिया युतं ............ ॥ – पा.

त्तमस्य जगत्कारणत्वादिकं सर्वज्ञत्वसर्वशक्तित्वादिकं हेयप्रत्यनीकत्व-कल्याणगुणाकरत्वादिकं च सर्वं सर्वेश्वर्या जगन्नायिकाया अपि साधारणम् । एवं श्रुतिस्मृत्यादिषु प्रतिपाद्यमानानां लक्ष्मीस्वरूपरूपगुण-विभवादीनां सामस्त्यं श्रीसूक्ते दरीदृश्यते ॥

हिरण्यगर्भः श्रीपुत्रः श्रीसूक्तस्य ऋषिः स्मृतः ।
देवता सैव विज्ञेया छन्दश्चात्र निगद्यते ॥
चतुर्थी पञ्चमी चात्र त्रिष्टुभौ छन्दसा स्मृतौ ।
शिष्टा अनुष्टुभश्चेति छन्दस्तत्त्वविदो विदुः ॥
अन्त्यां तृतीयां बृहतीं केचिदिच्छन्ति पण्डिताः ॥

अथवा—श्रीसूक्तस्य श्रियं देवीं भूषितां चैव देवताम् ।
अन्ये वदन्ति मुनयः छन्दःक्लृप्तिं च पूर्ववत् ॥

कुलास्य विनियोगः ? भोगमोक्षार्थिनां तेन श्रीसूक्तेन विधीयते ।
आराधने श्रियो देव्याः श्रीकामानां जपादिषु ।
बोधायनेन मुनिना सूत्रे च विनियुज्यते ॥

**तत्र तावद्बोधायनः** :—'अथातः श्रीसूक्तकल्पं व्याख्यास्यामः । चान्द्रायणं चरित्वा सहस्रं जपेत् सिद्धो भवतीत्यथ पुष्टिकाम उत्तरफल्गुन्यां पञ्चमीयोगे केवलायां वोपोषितो महाव्रीहितण्डुलैश्चरुं पयसि श्रपयित्वा बिल्वमयं परिधिं परिधाय बिल्मयमिध्मं आदध्यात् । अथ पायसादवदायाभिघार्य प्रत्यृचं दशाहुतीर्जुहोति आज्याहुतीस्समिदाहुतीश्च 'गन्धद्वारा'मित्यारभ्याऽऽन्तात्सूक्तस्य पद्मानि जुहुयात् । त्रयः प्राञ्चस्त्रय प्रत्यञ्च आत्मा सप्तमो महाश्रीर्भवति' इत्याह भगवान् बोधायनः।

**वसिष्ठस्मृतौ** :—[1]'अथ लक्ष्मीव्रतं वक्ष्ये । पञ्चम्यां शुक्लपक्षस्य चैत्रे मासि प्रदोषेऽविनालं सितमष्टदलपद्मं लिखित्वा, तत्र श्रियमावाह्याऽऽवाहनादिविसर्जनान्तं कृत्वा, समिदाहुतीश्च प्रत्यृचं अष्टाविंशतिं हुत्वा, श्रीसूक्तं जपित्वा ततः शेषं भुञ्जीत । सम्वत्सरान्महती श्रीर्भवति, अलक्ष्मीनाशश्च भवति ॥' इति ॥

**पाद्मे पुराणे** : [2]"लक्ष्मीसमाराधने विनियोगः ।

मल्लिकैः श्वेतपद्मैर्वा जातिपुष्पैरथापि वा ।
मन्दारकुसुमं चापि पूजायां गृह्यते श्रियः ॥
आद्ययाऽऽवाहयेत् देवीं श्रीसूक्तस्य नृपेश्वरीम् ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चैव तृतीयया ॥
चतुर्थ्याऽर्घ्यप्रदानं स्यात् पंचम्याऽऽचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ॥
मुक्तासंवीतमष्टम्या भूषणानि च पार्थिव ।
गन्धं दद्यान्नवम्या तु दशम्या पुष्पमेव च ॥
एकादश्या तथा धूपं द्वादश्या ज्योतिरेव च ।
पायसं घृतसंयुक्तं खण्डशर्करसंयुतम् ॥
निवेदयेत् त्रयोदश्या चतुर्दश्या प्रदक्षिणम् ।
उद्वासयेत् पञ्चदश्या लक्ष्मीं तां लोकमातरम् ॥
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनं नृप ।
कृत्वा प्रदक्षिणं देवीं प्रागुद्वासनकर्मणः ॥

---

[1] वसिष्ठस्मृ.   [2] पाद्मपु.

अग्रतोऽग्निं समाधाय समूह्याज्यस्य संस्कृतिम् ।
कृत्वाऽग्निं परिषिच्याथ जुहुयादाज्यसंप्लुतम् ॥
सूक्तस्य प्रत्यृचं देव्याः स्वाहान्तं प्रणवादिकम् ।
समिधं बिल्ववृक्षस्य पालाशं च तथैव च ॥
आज्याहुतिं तथा कृत्वा परिषिच्य तथैव च ।
अष्टाविंशतिकृत्वोऽथ जपन् सूक्तं श्रियं स्मरेत् ॥
सर्वदा प्रणवं दद्यादादौ सूक्तस्य पार्थिव ॥ "

**स्मृत्यन्तरेषु** [1]" श्रियः पंचदशर्चं तु श्रीकामस्सततं जपेत् । "

**पुराणान्तरेषु** [2]" यः श्रीसूक्तं जपेन्नित्यं ऋग्भिस्तामर्चयेच्छ्रियम् ।
श्रीकामो जुहुयादग्नौ पद्मैर्बिल्वैस्तथा फलैः ॥ "

विनियोगादीनां ज्ञातव्यत्वे प्रमाणम्—

[3]" अविदित्वा *ऋषिं छन्दो दैवतं योगमेव च ।
योऽध्यापयेद्याजयेद्वा पापीयान् जायते तु सः ॥ " इति ।

[4]†"यो ह वा अविदितार्षेयछन्दोदैवतब्राह्मणेन मन्त्रेण यजति याजयति वाऽध्यापयति वा स्थाणुं वर्च्छति गर्तं वाऽऽपद्यते प्र वा मीयते पापीयान् भवति यातयामान्यस्य छन्दांसि भवन्ति। अथ यो ‡मन्त्रे वेद स सर्वमायुरेति अयातयामान्यस्य छन्दांसि भवन्ति"इति । तथाऽर्थज्ञानाज्ञाने च

1 2 3 4

* ऋषिच्छन्दोदेवतायोगमेव च–क, ख. † यो वा अवि.–क. अथवाविदि. ख.
‡ मन्त्रं–क.

फलविशेषमाहुः । [1]"स्थाणुरयं भारवाहः किलाधीत्य वेदं न विजानाति योऽर्थं, योऽर्थज्ञ* इत् सकलं भद्रमश्नुते स नाकमेति ज्ञानविधूतपाप्मा" इति अनवगतार्थज्ञानस्य मन्त्रस्य सर्वमन्त्रवैयर्थ्यम्; अवगतार्थज्ञानस्य सर्वपुरुषार्थसाधकत्वं श्रुतम् । तस्मादवश्यं सूक्तादीनामर्थज्ञानं संपादनीयम् । तज्ज्ञानार्थमिदमपि सूक्तं व्याकुर्महे ॥

**हरिः ओं ॥ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥**

सर्वेश्वरेश्वरी लक्ष्मीर्भोगमोक्षप्रदायिनी ।
आद्ययाऽऽवाह्यते देवी श्रीनिवासाद्धरिप्रिया ॥

**हिरण्यवर्णां** इत्यादि । हे **जातवेदः** -लक्ष्मीपते; **जातं**-स्वतस्सिद्धं **वेदः**- धनं वा, ज्ञानं वा, यशो वा, यस्य जातवेदाः । स्वतस्सिद्धं सार्वज्ञ्यसर्वैश्वर्यादिकं साक्षाल्लक्ष्मीपतेरेव, नान्यस्य कस्यचित्। अग्न्यादित्यसोमसूर्यशिववैश्रवणचतुर्मुखशतमखादीनां ज्ञानबलैश्वर्य-वीर्यादिकं स्वपदलाभादिकं च भगवदायत्तमिति सर्वैः शास्त्रैः समर्थ्यते॥

तथा हि—चतुर्मुखस्य तावत् **महाभारते** :—

[2]"युगकोटिसहस्राणि विष्णुमाराध्य पद्मभूः ।
पुनस्त्रैलोक्यधातृत्वं प्राप्तवानिति शुश्रुम ॥"

---

1

2 भार. (?) (इतिहा. समु. १३-८) * अर्थज्ञः सकलं-क, ख.

शिवस्य **राजधर्मे** :[1]"महादेवः सर्वमेधे महात्मा
हुत्वाऽऽत्मानं देवदेवो बभूव ।
विश्वाँल्लोकान् व्याप्य विष्टभ्य कीर्त्या
विराजते द्युतिमान् कृत्तिवासाः ॥"

शतमखस्य **वैष्णवपुराणे** :—

[2]"इष्ट्वायमिन्द्रो यज्ञानां शतेनामरराजताम् ।
अवाप तमनन्तादिमहं द्रक्ष्यामि चक्रिणम् ॥"

**अग्न्यादित्यसोमानाम्** :– [3]"तेजोदास्त्वमस्यग्नेर्वर्चोदाः त्वमसि सूर्यस्य द्युम्नोदास्त्वमसि चन्द्रस्य" इत्यादिश्रुतेः । पुनरत्रैव : [4]"अग्निं वै जातं पाप्मा जग्राह तं देवा आहुतीभिः पाप्मानमपाघ्नन्" [5]"त्रिते देवा अमृजतैतदेनः । त्रित एतन्मनुष्येषु मामृजे" [6]"भीषाऽस्माद्वातः पवत" इत्यादि । यमस्य :–

[7]"अहममरवरार्चितेन धात्रा सम इति *लोकहिताहिते नियुक्तः ।
हरिगुरुवशगोऽस्मि न स्वतन्त्रः प्रभवति संयमने ममापि विष्णुः ॥"

सर्वेषां लोकपालानां **काश्यपीये** :—

[8]"ब्रह्माद्याश्च सुराः सर्वे मुनयश्च तपोधनाः ।
एधन्ते त्वत्पदच्छायामाश्रित्य कमलेश्वरि ॥" इति ।

---

[1] भार. शा. २०-१२. [2] वि. पु. ५-१७-७. [3] तै. उ. २-६३.
[4] तै. आर. २-१५. [5] तै. ब्रा. ३-७-१२. [6] तै. उ. १-१३.
[7] वि. पु. ३-७-१५. [8] काश्यपीये. * लोकहिते–ख.

**ब्राह्मे पुराणे** :—[1]"एक एव जगत्स्वामी शक्तिमानच्युतः प्रभुः ।
तदंशाः शक्तिमन्तोऽन्ये ब्रह्मेशानादयो यथा ॥"

**मंकणसंहितायां** :—

[2] "श्यामः किरीटी देवेशो वज्रभृद्विश्वनन्दनः ।
श्रीपूजानिरतो भोगी योऽसौ पुष्णातु मे श्रियम् ॥
वह्निर्विश्वभुगत्युग्रः शक्तिर्देवमुखो विभुः ।
पद्मापादार्चनपरः रक्तः पुष्णातु मे श्रियम् ॥
गारुत्मतनिभः पाशी वरुणो यादसां पतिः ।
सुधासूक्त्यर्चनपरः स्निग्धः पुष्णातु मे श्रियम् ॥
प्रवर्तयति लोकांस्त्रीन् जीवयत्यपि मारुतः ।
ख्यातिजाराधनपरः प्रीतः पुष्णातु मे श्रियम् ॥
उत्पत्तिस्थितिकृत्सोमस्सुधाधारो गदी बली ।
इन्दिराराधनपरः श्वेतः पुष्णातु मे श्रियम् ॥
शुद्धस्फटिकसंकाशः शूली लोकैकनायकः ।
विष्णुदेव्यर्चनपरः हरः पुष्णातु मे श्रियम् ॥"

**महालक्ष्मीसंहितायाम्** :—

[3] "सामर्ग्यजुर्मयीं देवीं देवगर्भां मनस्विनीम् ।
लोकेशेशविभूतीनां कारणं यन्निरीक्षणम् ॥" इति

---

[1] ब्राह्मे. [2] मंकणसं. [3] महालक्ष्मीसं.

भगवद्व्यतिरिक्तानां सर्वेषां देवानां स्वरूपरूपगुणविभवादिकं भगवदधीनमिति प्रपञ्चितम् । तस्मादत्र 'जातवेदः'शब्दः सर्वनिर्वाहकस्य श्रियःपतेर्वाचक इति । **परमात्मसूक्ते** 'जातवेदः'शब्दः परमात्मनि प्रयुज्यते । [1]"जातवेदसे सुनवाम सोमं" इति । परमात्मनि प्रयुक्तानामेवंविधानां शब्दानां रूढिमपहाय योगेनैव तद्वाचकत्वं भगवता शारीरकमीमांसासूत्रकारेण बादरायणेन [2]"आकाशस्तल्लिंगात्" [3]"प्राणस्तथानुगमात्" [4]"वैश्वानरस्साधारणशब्दविशेषात्" इत्यादिसूत्रैः सुदृढेन न्यायेन निरूप्य निर्णीतम् ॥

**हिरण्यवर्णाम्**—हितरमणीयाम् । हितत्वं नाम अपेक्षितार्थसाधकत्वं; रमणीयत्वं नाम प्रीत्यनुरूपत्वम् । सर्वहितत्वरमणीयत्वाभ्यां देव्या दिव्यरूपमेव परमप्राप्यं *परमप्रापकमिति च दर्शितम् ।

तथा† **धनदीये** [5]"सर्वलक्षणसंपन्नां श्रियं श्रेयःप्रदायिनीम् ।
क्षिप्रप्रसादिनीं देवीं शरण्यामनुचिन्तयेत् ॥

**वैष्णवपुराणे**[6] "ततः स्फुरत्कान्तिमती विकासिकमले स्थिता ।
श्रीर्देवी पयसस्तस्मादुत्थिता धृतपङ्कजा ॥"

**हरिणीं**—सर्वपापहरणशीलाम् । 'ताच्छील्ये णिनिः' । वृद्ध्यभावः छान्दसः । [7]"पापहारिणी" इति तस्या नामसु पठ्यते ।

---

[1] तै.उ. २-२-११. [2] शा. सूत्र. १-१-२३. [3] शा. सूत्र. १-१-२९.
[4] शा. सूत्र. १-२-२५. [5] धनदीय. [6] वि. पु. १-९-१००.
[7] लक्ष्मीसहस्रना. * प्रापकमिति–क. † नारदीये–ग.

**काश्यपीये** [1]"सर्वदुःखौषधं नृणां सर्वपापक्षयप्रदाम् ।"

**वैष्णवे** [2]"त्वं सिद्धिस्त्वं स्वधा स्वाहा" इति । अथवा **हरिणी**– कृष्णमृगी । [3]"सा मेध्या सर्वयागार्हा सर्वपापहराऽपि च"। भगवत्समाश्रयणयोग्यतापादिनीति यावत् ।

**काश्यपीये** [4]"नारायणात्मिकां देवीं श्रियं त्रैलोक्यमातरम् ।
भजमानां महाभाग परमो धर्म उच्यत ॥" इति ।

**सुवर्णरजतस्रजाम्**— स्वसौन्दर्यलावण्यानुगुणनित्यनिर्मलविराजमान-स्रग्वस्त्राभरणोद्भासिताम् । **श्रीविष्णुपुराणे**: [5] "स्रग्वस्त्राभरणैर्युक्ता दिव्यमाल्यांबरधरा । ++++ ययौ वक्षःस्थलं हरेः ॥" तद्ध्याने च [6] "सुवर्णरजतां मालां धारिणीं सुमुखीं सदा" इति । **चन्द्राम्**— सर्वाह्लादकारिणीम् । 'चदि आह्लादने' । इदित्वान्नुम् । औणादिको र[*क्]प्रत्ययः । तापत्रयतप्तान् स्वसमाश्रयणोन्मुखानाह्लादयन्तीम् ।

तथा– [7] "शुद्धस्फटिकसंकाशां चन्द्रायुतसमप्रभाम् ।
लावण्यामृततोयेन सिञ्चन्तीं शोभनाननाम् ॥"

[8] "नमामि चन्द्रनिलयां चन्द्रां चन्द्रसहोदरीम् ।
चतुर्भुजां चन्द्ररूपामिन्दिरामिन्दुशीतलां ॥
आह्लादजननीं पुष्टिं शिवां शिवकरीं सतीम् ॥"

---

[1] काश्य. [2] वि. पु. १-९-११९. [3] [4] काश्य.
[5] वि. पु. १-९-१०५. [6] [7] [8] लक्ष्म्यष्टोत्तरे.

[1] "ततोऽवलोकिता देवा हरिवक्षःस्थलस्थया ।
लक्ष्म्या मैत्रेय सहसा परां निर्वृतिमागताः ॥ "

*तथा [2] "पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये ।
स्ववक्त्रेन्दुकलोत्थेन ह्लादयन् गोगणेन तु ॥ " इति ।

**हिरण्मयीम्**—हिरण्यादिसर्वधनप्रचुरां । "वामहस्तवसुप्रदां" इति तद्ध्याने । [3] "वसुधारामुदारां च हरिणीं वसुवर्षिणीम् ।
धनधान्यकरीं सिद्धिं वसुधां वसुधारिणीम् ॥
निविद्धयेनापि धनं प्रापयन्तीं मनोरथान् ॥ "

तथा : [3] "शंखपद्मनिधी लक्ष्म्याः पादयोरग्रतः स्थितौ ।
पश्यन्तौ मुखमन्योऽन्यं वमन्तौ विपुलं धनम् ॥ "

**लक्ष्मीम्**—सर्वसुरासुरमनुजमुनीन्द्रादिभिर्लक्षणीयां--प्रार्थनीयां; सर्वैश्वर्यनिमित्तभूतदिव्यलक्षणसंपन्नां वा ।

तथा : [4] "ब्रह्माद्यास्सकला देवा मुनयश्च तपोधनाः ।
त्वां स्तोतुमपि नेशानास्त्वत्प्रसादलवं विना ॥" इति ।

**जातवेदो म आवह**—एवं भूतां तां लक्ष्मीं त्वत्समाश्रयणोन्मुखस्य सर्वोपकरणसमृद्ध्यर्थं, **आवह**—सन्निधापय । लक्ष्मीनिरीक्षणादेव सर्वेषां सर्वसमृद्धिः । यथा [5] "सः श्लाघ्यस्सगुणी धन्य" इत्यादि, [5] "देवि निरीक्षस" †इत्यन्तं; [6]"दाराः पुत्रास्तथाऽऽगारा" इत्यादि च ॥ १ ॥

---

[1] वि. पु. १-९-१०६. [2] सात्वते. [3] [4]
[5] वि. पु. १-९-१३१. [6] * तथा इति न–क. † इति–ख.

पूर्वेणावाहितां लक्ष्मीं सर्वमङ्गलदायिनीम् ।
अनन्यगामिनीं नित्यां द्वितीयेन नियच्छति ॥

**तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।**
**यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥**

**हे जातवेदः**—स्वयंसिद्धसर्वसमृद्धे लक्ष्मीपते । भगवतः सर्वसमृद्धिः स्वयं सिद्धेति सर्वशास्त्रप्रसिद्धा । यथा—

[1] "नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्येशे कश्चन तस्य नाम महद्यशः ॥ "

[2] "पतिं विश्वस्याऽऽत्मेश्वरं, " "नान्यो हेतुर्विद्यत ईशनाय " । एतासामुपबृंहणम् [4] "कालस्य हि च मृत्योश्च जंगमस्थावरस्य च ।
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ "

इत्यादि । **तां**—पूर्वोक्तसमस्तकल्याणगुणगणप्रकाराम्* । **लक्ष्मीं**—चतुर्मुखशतमखादिसकलसुरासुरप्रार्थनीयविभवलक्षणाम् ; [5] " सर्वलक्षणसंपन्नाम्, " [6]"न ते वर्णयितुं शक्या" इत्यादि । भवदावानलप्लुष्टतया त्वत्कटाक्षामृततरङ्गिणीतरङ्गपरम्पराप्लाव्यमानस्य **मे**—मत्सेवार्थं । **इहावह**-मयि सन्निधापय । कथमित्यपेक्षायां **अनपगामिनीम्**-मत्समीपादन्यत्र कदाचित् क्वचिद्गन्तुं नेच्छन्तीं; यथा मयि नित्यानपायिनी, तथा कुरु । तथा [7] "आवहन्ती वितन्वाना कुर्वाणा चीरमात्मनः "

---

[1] तै. उ. २-१. [2] तै. उ. नारा. २-११. [3] * प्रकारां तां-ख. ग.
[4] भार. उ. ६७-१३. [5] [6] [7] तै. उ.१-४.

चीरं कुर्वाणा। **यस्याम्**--सकलापेक्षितप्रदातृत्वेन श्रुतिस्मृतिसिद्धायां ; यथा [1]"स श्लाघ्यस्सगुणी धन्य" इत्यादि। **हिरण्यम्**—हिरण्यरूप्यादि *आकूप्यं धनजातम्। **गाम्**—गोमहिषादिजीवधनम्। **अश्वम्**— †रथ-गजतुरगादिवाहनसमृद्धिम्। **पुरुषान्**—दासीदासादिपरिचारकान् सर्वैर्विभवैर्विहीनोऽहम्। **विन्देयम्**—सर्वां विभूतिं लभेयमिति। तथा [2]"वासांसि मम गावश्च। अन्नपाने च सर्वदा। ततो मे श्रियमावह। लोमशां पशुभिस्सह स्वाहा" इति।

**स्वायंभुवे** :— "यद्यत्कामयते बुद्ध्या यद्यद्दृष्ट्वा च याचति।
तत्तदेतेन बीजेन स्वयमेवागमिष्यति ॥" ॥ २ ॥

‡जगत्सर्गस्थितिध्वंसव्यापनादिषु कर्मसु।
स्वप्रेयांसं तृतीयेन क्रीडन्तमनुधावतीम् ॥
आह्वयति इति शेषः।

**अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम्।**
**श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥**

**अश्वपूर्वां**-व्यापनभरणनियमनादिजगद्व्यापारेषु, अश्वः-व्यापनशीलो भगवान् यस्याः §पूर्वप्रदेशे, सा अश्वपूर्वा ताम्। 'अशू व्याप्तौ' अश्वशब्द[*:]व्याप्तिकर्मणः अश्नोतेरौणादिकः क्वन्तः।

---

[1] वि. पु. १-९-१३१. [2] तै. उ. १-४. [3]स्वायंभुवे. * कनकजातं-ख.
† गजरथ-क. ‡ जगज्जन्म-ख. § पूर्वप्रादेशिकः। अशू व्याप्तौ-ख.

[1] "यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम" इति।

**रथमध्यां**—रथानां—ईहाशीलानां* जीवानां, **मध्ये**—हृदयगुहायां आत्मत्वेन या तिष्ठति सा **रथमध्या**। यद्वा, रथस्य—शरीरस्य, श्रीनिवासस्य सर्वेश्वरस्य सौन्दर्यलावण्याद्याकाराप्राकृतपञ्चशक्तिमयदिव्यविग्रहस्य; [2]"आत्मानं रथिनं विद्धि शरीरं रथमेव च" इति श्रुतिप्रसिद्धेः। तस्य मरकतगिरितटविशाले श्रीवत्सकौस्तुभादिकल्पिताकल्पे मङ्गलाकारे वक्षःस्थले नित्यसन्निहिता। तथा—[3]"पश्यतां सर्वदेवानां ययौ वक्षःस्थलं हरेः" इति। **हस्तिनादप्रबोधिनीम्**—गजेन्द्राद्याश्रितार्तनादे परमकृपाम्बुधेः सर्वेश्वरादपि प्रथमप्रबोधनशीलाम्; आर्तसंरक्षणे पुरुषोत्तमादपि त्वरमाणाम् इति यावत्। [4] "करुणास्नानतमुखी" "सर्वार्तिसमुद्रपरिशोषिणी" इति‡ तन्नाम्नि॥

§पूर्वार्धस्यैवं[वा]योजना। **अश्वपूर्वाम्**—यस्याः प्रयाणकाले सेनाग्रे असंख्येयान्यश्वबृन्दानि पुरस्ताद्गच्छन्ति तां **अश्वपूर्वाम्**। **रथमध्याम्**—यस्यास्सेनामध्ये मणिमयानि दिव्यानि रथकदंबानि सन्निहितानि भवन्ति तां, **रथमध्याम्**। **हस्तिनादप्रबोधिनीम्**—पद्मवनवासित्वात् पद्मप्रियाणां गजानां नादैः प्रबुद्ध्यमानाम्। यद्वा—स्वासनपद्मस्थगुलगुल

---

[1] वि. पु. १-८-१७. [2] कठ. ३-३. [3] वि. पु. १-९-१०५. [4] लक्ष्मीसहस्रनामाध्याये-करुणाग्रानतमुखी.-इति पाठः। करुणार्द्रानतमुखी—ग. *रथानामिह क.-महाशीलानां ग. रहणशीलानां-घ॥ ‡ तन्नामानि—ख. तन्नामनी—ग.

§ पूर्ववत् अस्यैवं वा योजना। अश्वपूर्वा—अश्वाः पूर्वाः यस्यां प्रयाणकाले—ख.

कुरण्डदमकशलिलानां* तद्भक्तानां निनादैरहरहः प्रबुद्ध्यमानाम् ।
**तथा मङ्कणसंहितायाम्**—

[1]“आग्नेयादिदलस्थास्ते गुल्गुलुश्च कुरण्डकः ।
दमकः शलिलश्चेति ख्याताः पुष्णन्तु मे श्रियम् ॥”

**काश्यपीये**—[2]“ऐरावतादिभिः सम्यक् सामजैरावृतां† शुभाम् ।”

**स्वायंभुवे** —[3]“‡कोणपत्रगतैर्दिव्यैर्हिरण्यकलशोदकैः ।
संप्रीतैः स्नाप्यमानां तां बोध्यमानां च तैर्गजैः॥”इति ।

**श्रियम्**—भगवद्वक्षःस्थलैकाश्रयाम् । **देवीम्**—जगत्सृष्ट्यादिकर्मनर्मविनोदैः स्वप्रेयांसं श्रीमन्तमनुक्रीडन्तीम् । **उपह्वये**—अनेन मन्त्रेण मम समीपं प्रापयामि । **सा श्रीः**—सर्वैराश्रयणीयाऽपि उपाश्रिता **मां** त्वदेकशरणम्, **देवी**—कन्तुकेनेव संकल्पमात्रोदञ्चनाकुञ्चनादिमता मया संक्रीडमाना । **जुषताम्**—असल्लीलोपकरणमयमिति प्रीता भूयात् ॥

अपरस्मिन्मन्त्रे प्रायेण स्तोत्रात्मना सर्वमङ्गलावहानि देवीनामान्येव पठितानि ॥ **ब्राह्मे** नाममाहात्म्ये :—ब्रह्मा—

[4]“चतुर्दशविधस्यास्य भूतसर्गस्य केशव ।
परित्राणाय मे ब्रूहि रहस्यं परमाद्भुतम् ॥
दारिद्र्यनाशनं धर्म्यं मनोज्ञं पापनाशनम् ।
श्रियस्सर्वातिशायिन्याः तथा ज्ञानं च शाश्वतम् ॥

---

[1] मङ्कणसं. [2] काश्यपीये. [3] स्वायंभुवे. [4] ब्राह्मे. *शललिनाम्—क. ख.
† सामजैरर्चितां—ख. ‡ कोणपत्रगजैर्हेमकलशैरमृतोदकैः । संप्रीतैः तृप्यमानां-क.

नामानि चैव मुख्यानि यानि गौणानि चाच्युत ।
त्वद्वक्त्रकमलोत्थानि श्रोतुमिच्छामि तत्त्वतः ॥" इति

**हिरण्यगर्भेण पृष्टो भगवान्**ः—

"देव्याः संस्मृतिमात्रेण दारिद्र्यं याति भस्मसात् ।
तथाऽष्टगुणमैश्वर्यं ददाति पठतां नृणाम् ॥" इति ॥ ॥ ३ ॥

संस्तूय नामभिर्दिव्यैः प्रसन्नां करुणाननाम् ॥
चतुर्थेन पुनर्देवीं सुस्मितां परिपश्यति ॥

**कां *सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीं ।**
**पद्मे स्थितां पद्मवर्णां त्वामिहोपह्वये श्रियम् ॥ ४ ॥**

**काम्**—सुखस्वरूपाम् । आनन्दमयस्य पुरुषोत्तमस्य आनन्दहेतुरियमिति हि शास्त्रप्रसिद्धिः । [1]"प्रिया तु सीता रामस्य दाराः पितृकृता इति ।
गुणाद्रूपगुणाच्चापि प्रीतिर्भूयोऽभ्यवर्धत ॥"

**नाममालायां**—[2]"नमामि भार्गवीं ख्यातिं सुखां सौम्यां सुखप्रदाम् ।" अथवा संसारसागरनिमग्नैः स्वोत्तारणाय प्रष्टव्यां **कां** । तथा [3]"कतमा का या सा सत्या" इति । ***सोस्मयाम्**—उत्स्मयसहिताम् । तकारलोपः छान्दसः । भगवत्संश्लेषजनितमहानन्दनिमग्नतया सर्वदा स्मयमानाम् ।

---

[1] रा. बा. ७७-२६. [2] नाममाला. [3] तै. उप. २-२१.

* सोस्मितां—ख. ग.

**भविष्योत्तरे**–[1] " उत्संगे देवदेवस्य चिन्तयेत्सततं स्थिताम् ।
विद्रुमाधरबिम्बां तां कुन्दकोरकदन्तकाम्† ॥
शंखचक्रधरां देवीं *हेमाभां सुस्मितानननाम् ।"

**धनदीये**– "सुस्मितास्योत्पलोद्भासिसुशुक्लदशनांशुभिः ।
नयन्मधुलिहः श्वैत्यमात्मगन्धानुपातिनः ॥ "

**हिरण्यप्राकारां**–नानारत्नमयसुवर्णमयप्राकारपरिवृतानन्दमयदिव्यमण्डपान्तर्निवासिनीम् । तथा च श्रुतिः [3] " देवानां पूरयोध्या तस्यां हिरण्मयः कोशः स्वर्गो लोको ज्योतिषाऽऽवृतः " †इत्यादि । [4] "यं मृत्युर्नावपश्यति तं प्रपद्ये " इति च । **मङ्कणसंहितायाम्**

[5] " माहेन्द्रमण्डपं हेमसालगोपुरलक्षणम् ।
चतुर्द्वारं महद्दीप्तं यत्तत्पुष्णातु मे श्रियम् ॥ "

**आर्द्राम्**–दयार्द्रहृदयाम् । स्वचरणांभोजसमाराधनार्थं दिग्गजेन्द्रैरमृतकलशैः स्नाप्यमानतया आर्द्रदेहां वा । **ईश्वरसंहितायाम्** :—

[6] " दिग्गजेन्द्रैः स्नाप्यमानां काञ्चनैः कलशोदकैः ।"

**ज्वलन्तीम्**–लावण्यमयेन स्वतेजसा सर्वांल्लोकान् भासयन्तीम् ।

[7] " ज्वलन्तीं तेजसा स्वेन सा मे देवी प्रसीदतु ॥ "

**भविष्योत्तरे** :— [8] "‡भाभासितदिशाभोगां साक्षाद्भानोः प्रभामिव ।
सहस्रादित्यसङ्काशां सहस्रेन्दुनिभाननाम् ॥ "

---

[1] भविष्योत्तरे. †सद्विजां–ख. [2] धनदीये. [3] तै. आर. १-२७-११६.
[4] तै. आर. २-१९-१. [5] मङ्कणसं. [6] ईश्वरसं. [7] [8] भविष्योत्तरे.
* श्यामाभां–क. † इत्यादि । चतुर्जालं ब्रह्मकोशं यं मृत्युः–ख. ‡ स्वभासित–ग.

'ज्वलन्तीं' इत्यस्याः 'आर्द्रां' इति विशेषणं वा । [1]"आर्द्रं ज्वलति ज्योतिरहमस्मि" इति श्रुत्या 'आर्द्रां' इति ज्वलतेर्विशेषणमाम्नातम् । **तृप्ताम्**—भगवत्संश्लेषजनितेन महानन्देन स्वयं तृप्ताम् । **तर्पयन्तीम्**—कान्तिशान्त्याकरमधुरशीतलविलोकनामृततरङ्गपरंपरया तापत्रयतप्तं प्राणिजातमाह्लादयन्तीम् ।

**सात्वते**—[2]"पूर्वकर्मानलार्तानां ध्यायिनां खेदशान्तये ।
स्ववक्त्रेन्दुचयोत्थेन ह्लादयन्गोगणेन तु ॥" इति ।

तथा **पद्मे स्थिताम्**-स्वसौन्दर्यसौकुमार्यानुगुणसुगन्धशीतलसुखस्पर्शपद्मासनासीनाम्; **पद्मवर्णाम्**-पद्मोदरसहोदराम्; अशेषजनवर्णनीयलावण्यमयदिव्यशोभाम् । तथा **मङ्कणसंहितायाम्** :—

[3]"पद्मे स्थिता पद्मवर्णी पद्मनाभप्रिया शुभा ।
सदानुग्रहसंपन्ना सा मे देवी प्रसीदतु ॥"

**भविष्योत्तरे**:—[4]"पद्मालयां पद्महस्तां पद्मां पद्मदलेक्षणाम् ।" पूर्वोक्तसर्वगुणविशिष्टां **तां**-श्रियं, सर्वैः सर्वप्रकारैस्समाश्रयणीयां इह—तच्छेषतैकस्वरूपे मयि, **उपह्वये**—तदनुकूलाञ्जलिमुद्रादिभिरभिमुखीकरोमि ॥ ॥ ४ ॥

आहूतामागतां देवीं पञ्चमेन प्रपद्य ताम् ।
नाशं दुस्सहभार्याया अलक्ष्म्या वृणुते ततः ॥

---

[1] तै. उप. २. [2] सात्वते. [3] मङ्कणसं. [4] भविष्योत्तरे

चन्द्रां प्रभासां यशसा ज्वलन्तीं
श्रियं लोके देवजुष्टामुदाराम् ।
तां[§]पद्मनेमिं शरणमहं प्रपद्येऽ-
लक्ष्मीर्मे नश्यतां त्वां वृणे ॥ ५ ॥

[*]**चन्द्राम्**— ' चदि आह्लादने'; निरतिशयानन्दरूपामिति यावत् । आनन्दस्वरूपां, आनन्दगुणकां, आनन्दविग्रहां चेत्यर्थः । **प्रभासाम्**— प्रकृष्टतया भासमानाम् ; शुद्धसत्वप्रकाशशुभाश्रयदिव्यमङ्गलविग्रहाम् । यद्वा, **प्रभासां**[*]—सर्वस्य लोकस्य सहस्रेन्दुसमप्रकाशाम् । [†]**यशसा**— देवस्य सर्वेश्वरस्य सहधर्मचारित्वेन सर्वलोकविदितेन गुणवत्त्वसौभाग्येन यशसा । **ज्वलन्तीम्**—अनुकूलाननुकूलास्वादतापकरदिव्यज्योतिः- स्वरूपाम् । तथा **मङ्कणसंहितायाम्**—

[1] " सद्रत्नरूप्यसंमिश्रहेममालापरिष्कृता ।
ज्वलन्ती तेजसा स्वेन सा मे देवी प्रसीदतु ॥ " इति ।

[‡]यद्वा, **यशसा ज्वलन्तीम्**—निरतिशयमङ्गलविभूत्यादिमत्तया तथाविध- गुणविभूत्यादिप्रदतया [2] " यद्यद्विभूतिमत् " इत्यादिप्रमाणसिद्धतया

---

[1] मङ्कणसं. [2] गीता. १०-४१.

* 'चन्द्रां' इत्यारभ्य 'यशसा' इत्यन्तं पंक्तिचतुष्टयं न—ख. † यशसा ज्वलन्तीं— अनुकूलाह्लादेन तापहरां । चन्द्रां प्रभासां सर्वस्य...प्रकाशां । दिव्यज्योतिःस्वरूपां । तथा मङ्कण.—ख. ‡ 'यद्वा' इत्यारभ्य 'दीप्यमानां' इत्यन्तं न—ख. § नेमीं—पा.

अनुग्रहैकस्वरूपतया च संपन्नयशसा दीप्यमानाम्‡ । **श्रियं**—सर्वसमाश्रयणीयाम् । *यद्वा 'शृणोति श्रावयति' इत्याद्युक्तप्राप्यत्वप्रापकत्वोपयुक्तसमस्ताकारवतीम् । **लोके**—विभूतिद्वये* । 'लोक' इति जातावेकवचनम् ; सर्वेषूपरिलोकेषु वर्तमानैरिति यावत् । पूर्वपदेनान्वयः । **देवजुष्टां**—देवैः चतुर्मुखशिवशतमखहुतवहादिदेवैः अनन्तगरुडादिभिः देवोत्तमैश्च, स्वपदलाभाय तदनुगुणसमृद्धये आनन्दानुभवाय च, यजनभजनमननादिभिः **जुष्टां**-सेव्यमानाम् । **मङ्कणसंहितायां** -[1]†"श्यामः किरीटी देवेश" इत्याद्याः श्लोका अप्यनुसन्धेयाः ।

यद्वा, **देवजुष्टां** - देवेन निरुपाधिकक्रीडनादिमता [2]"दिव्यो देव एको नारायण" इत्युक्तदेवेन, **जुष्टाम्**-निरतिशयप्रीतिविषयीकृताम् । **उदारां**—तेभ्यः सुरादिभ्यः सर्वकामवर्षिणीम् ।
**काश्यपीये** :—[3]"सर्वकामप्रदां देवीं शरण्यामनुचिन्तयेत् ।" इति ।
यद्वा **उदारां** [4]"ऐश्वर्यमक्षरगतिं" इत्याद्युक्तौदार्यगुणवतीम् । उक्तं च **भट्टपराशरपादैः श्रीगुणरत्नकोशे**—

[4]"ऐश्वर्यमक्षरगतिं परमं पदं वा
कस्मैचिदञ्जलिभरं वहते वितीर्य ।
अस्मै न किंचिदुचितं कृतमित्यथाम्ब
त्वं लज्जसे कथय कोऽयमुदारभावः ॥" इति ।

---

**पा.** *'यद्वा' 'विभूतिद्वये' इत्यन्तं न-ख. †श्यामां इति अत्र पाठः ।(पश्यत पृ.२९.)

[1] मङ्कणसं. [2] सुबाल. ७. [3] काश्यपीये. [4] श्रीगुण. ५८.

**पद्मनेमिम्**—पद्ममेव नेमिः नयनसाधनं यस्याः सा **पद्मनेमिः**। 'नीङ् प्रापणे,' "नियो मिः" इत्यौणादिको 'मि'प्रत्ययः। करतलकलितेन पद्मेन समाश्रितानां सर्वेषां सर्वमनिष्टमपहाय सर्वकालं स्वचरणाम्भोजं प्रापयन्तीमित्यर्थः। यद्वा, **पद्मनेमिं**—नाभिस्थानीयकर्णिकायां नेमिस्थानीयपद्मवतीम्। पद्मस्य नेमित्वोक्त्या कर्णिकाया नाभिस्थानीयत्वव्यञ्जनात्, मातुस्तत्रावस्थानं व्यज्यते। **ताम्**—उक्तगुणविशिष्टाम्। यद्वा, **ताम्**—अहिर्बुद्ध्न्यसंहितालक्ष्मीतन्त्रादिप्रसिद्धवैभवां सर्वेश्वरीम्, **अहम्**—अत्यन्ताकिञ्चनोऽहमुपायान्तरशून्यः, **शरणं प्रपद्ये**।

[1] "इह चामुत्र चानिष्टनिवृत्तीष्टाप्तिसिद्धये।
साक्षाल्लक्ष्म्याः पदाम्भोजे भूयास्तां शरणं मम॥"

**स्वायंभुवे** [2] "सर्वकामप्रदां सौम्यां संसारार्णवतारिणीम्।
क्षिप्रप्रसादिनीं देवीं शरण्यामनुचिन्तयेत्॥
अनेनैव प्रपन्नस्य श्रियं देवीं सनातनीम्।
पापानुषङ्गस्सकलस्तत्क्षणादेव नश्यति॥"

पुनरपि, **त्वां वृणे**—त्वच्चरणारविन्दयुगलमेव परमोपायमध्यवस्यामि। अनया प्रपत्त्या त्वत्प्राप्तिविरोधिनी **अलक्ष्मीः**—दुस्सहभार्या, **मे**—त्वत्स्मृतिकीर्तनादौ प्रवृत्तान्मत्तः, **नश्यतां**—नश्यतु॥

**लैङ्गे** [3] "अलक्ष्म्येषा च संत्यज्य गमिष्यति च येन वै।
लक्ष्म्यावासो भवेन्मर्त्यस्सूत वक्तुमिहार्हसि॥" इति

---

[1]   [2] स्वायंभुवे.   [3] लैङ्गे. ७.२; ६-११.

विप्रैः पृष्टः सूतः "नारायणं जपेन्नित्यं प्रणम्य पुरुषोत्तमम् ।
स्वपन्नारायणं देवं गच्छन्नारायणं तथा ॥ ६ ॥
भुञ्जन्नारायणं विप्रास्तिष्ठञ्जाग्रत्सनातनम् ।
उन्मिषन्निमिषन्वाऽपि नमो नारायणेति वै ॥ ७ ॥
भोज्यं पेयं च लेह्यं च नमो नारायणेति यः ।
अभिमन्त्र्य स्पृशन् भुंक्ते स याति परमां गतिम् ॥ ८ ॥
सर्वपापविनिर्मुक्तः प्राप्नोति परमां गतिम् ॥
अलक्ष्मीश्च मया प्रोक्ता पत्नी या दुस्सहस्य च । ९ ॥
नारायणपदं *ध्यात्वा नश्यत्येव न संशयः ॥
या लक्ष्मीर्देवदेवस्य †हरेरीशस्य वल्लभा ॥ १० ॥
गृहे क्षेत्रे तदाऽऽवासे तनौ वसति §सुव्रता ॥" इति ।

‡यद्वा, **शरणं प्रपद्ये**—निरपेक्षमदभिमतसाधकत्वाध्यवसायपूर्वकं तव चरणारविन्दयोर्भरन्यासं करोमि । **अलक्ष्मीः**—[1] 'सा हि श्रीरमृता सतां' इत्युक्तब्रह्मविद्याया अभावः । **मे**—ब्रह्मविद्याविरोधिपापाक्रान्तस्य । **नश्यतां**—क्षिप्रं नश्यतु । **त्वां वृणे**—अनुग्रहैकरूपां मम मातरं गोप्तृत्वेन, **वृणे**—यथावस्थितमोक्षोपायनिष्पत्त्यर्थं प्रार्थये ॥

अस्मिन्मन्त्रे श्रीशब्दे आनुकूल्यसङ्कल्पप्रातिकूल्यवर्जनरूपमङ्गद्वयमनुसन्धेयम् । 'अहं' शब्दे आकिञ्चन्यानुसन्धानरूपं कार्पण्यं अङ्गमनुसन्धेयम् । 'त्वां वृणे' इत्यत्र गोप्तृत्ववरणरूपमङ्गमनुसन्धेयम् । 'शरणं प्रपद्ये'

---

**पा.** *श्रुत्वा इति मुद्रितपुस्तके. श्रुत्वा गच्छत्येव—ख. †हरेः कृष्णस्य इति च । §भूतये—ख. [1] तै. ब्रा. ३-७.

इत्यत्र महाविश्वासरूपमङ्गं भरन्यासरूपोऽङ्गी चानुसन्धेयः। एवं मन्त्रार्थमनुसन्धाय श्रीप्रपदनानुष्ठानं कर्तव्यमिति संप्रदायः ॥‡ ॥ ५ ॥

श्रीसाधकेन बैल्वेन फलेन श्रीविघातिनः ।
षष्ठेऽलक्ष्मीश्च तद्विघ्नान्मायादीन्नाशयत्ययम् ॥

**आदित्यवर्णे तपसोऽधिजातो**
**वनस्पतिस्तव वृक्षोऽथ बिल्वः ।**
**तस्य फलानि तपसा नुदन्तु**
***मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥**

**आदित्यवर्णे**—बाह्यान्तरसकलतमोविरोधितेजोमयदिव्यस्वरूपे ।
[1] "तन्मध्ये कर्णिकायां श्रीः संस्थिता पद्ममालिनी ।
दीप्ता चतुर्भुजा भद्रा सा मे देवी प्रसीदतु ॥"

**धनदीये** [2] "भाभासितदिगाभोगां साक्षाद्भानोः प्रभामिव ।
पद्मनाभप्रियाम्........................... ॥"

अथवा, अकारवाच्यात् सर्वेश्वरात्, इत्यं-प्राप्यं, वर्णं यस्यास्सा, †आदित्यवर्णा । हे **आदित्यवर्णे**

**धनदीये** [2] "पश्यन्तस्तां श्रियं देवीं सर्वे पीताम्बरास्थिताः ।
सुमुखाश्च सुरूपाश्च सर्वलक्षणसंयुताः॥"इति वासुदेवादयः।

---

[1]    [2] धनदीये.

**पा.** *ममान्तरायाश्च.   ‡ 'यद्वा' इत्यारभ्य एततपर्यन्तं पंक्तिदशकं न–ख.
† आदित्यवर्णा । तपसः–सङ्कल्पात्–ख.

**तपसोऽधिजातः**—**तपसः**—सर्वैश्वर्यास्तव सङ्कल्पात् ; [1] "यस्य ज्ञानमयं तप" इति तपः सर्ववेदनज्ञानमुच्यते । **अधिजातः**—सर्वमङ्गलान्यधिकृत्य जातः—समुद्भूतः । **वनस्पतिः**—वनानां पतिः, सर्वेषां वृक्षसमूहानामधिपतित्वेन प्रसिद्धः । **अथ**—अत्र अथशब्दो मङ्गलवाची मङ्गलस्वरूपः । **बिल्वः**—[2] "बैल्वो यूपो भवत्यसौ वा आदित्यो यतोऽजायत ततो बिल्व उदतिष्ठत् स योऽन्येव ब्रह्मवर्चसमवरुन्ध" इति **ब्राह्मणे** आदित्यकारणभूताच्छ्रियःपतेर्बिल्वस्योत्पत्तिः श्रुता । भगवान् **बोधायनः** तच्छेषे लक्ष्मीसमाराधने [3] "बिल्वमयं परिधिं परिधाय बिल्वमयमिध्ममादध्यात् । अथ पायसादवदाय प्रत्यृचं दशाहुतीर्जुहोति" इति । तत्रैवान्यत्र :—[3] "श्रीकामो जुहुयादग्नौ पद्मैर्बिल्वैस्तथा फलैः" । एवं मङ्गलावहो यो बिल्ववृक्षः, **तस्य फलानि तपसा**—स्वहोमवीक्षणकीर्तनस्पर्शनस्मृतिरूपेण तपसा लक्ष्मीचरणाम्भोजसेवाविरोधिनः सर्वविघ्नान्, **नुदन्तु**—नाशयन्तु ।

तथा **धनदीये** [4] "अल्पां बिल्वान्तरांभोजसरःस्थां संस्मरेद्बहिः ।"
तत्रैवान्यत्र : [4] "श्रियं च देवीमभ्यर्च्य आसीनो बिल्वमूलके ।
नित्यं बिल्वफलान्नाशी बिल्वच्छायामुपोषितः ॥
न छिन्द्याद्बिल्वं यत्नेन नावमन्येत तन्नरः ॥"

के ते विघ्नकरा इत्याशङ्कायामाह—**मायान्तरायाश्च बाह्या अलक्ष्मीः** । †**माया**—अन्यथाज्ञानान्यथाप्रवृत्तयः । **अन्तरायाः**—

---

[1] मुण्ड. १-१-९. [2] तै. सं. २-१-८१. [3] बोधायन. [4] धनदीये.

तद्भजनसेवादिविघ्नाः, तान्—कामक्रोधलोभमोहादीन्; **बाह्याः**—लक्ष्मीसंबन्धरहिताः;[†] **अलक्ष्मीः**-लक्ष्मीप्रतिभटभूताः; सर्वांस्तान् विनाशयन्तु। ते सर्वे श्रीसंबन्धविरोधिनः।

तथा [1] "मायां न सेवे भद्रं ते" [2] "विघ्नोऽन्तरायः प्रत्यूहः।"

[3] " त्रिविधं नरकस्यैतद्द्वारं नाशनमात्मनः।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत्॥"
"अतिमानं सदाहासं वाक्प्रलापं विकत्थनम्।
आत्मनाशात्ममननमात्मनिन्दाप्रशंसने॥"

**बाह्याः**—लक्ष्मीव्रतविरोधिनः।

[4]"सरोषं च सवार्तं चार्चनादिकृतं यदि।
तद् यातुधाना गृह्णन्ति तद्यत्नेनैव वर्जयेत्॥
अष्टम्यां च चतुर्दश्यां नवम्यां पर्वणोस्तथा।
श्रीकामो न स्पृशेत् तैलं षष्ठ्यां चैव विशेषतः॥"
[5] "कुशीलनं" इत्यादि॥

**अलक्ष्मीः**—दुस्सहपत्नी, *तत्सहचारिण्यश्च अश्रीः। अश्रीर्वाऽऽह। ता नाशयामि इत्यनेन संबन्धः॥ ॥६॥

---

[1] भार. उद्यो. ६८-५. [2] अमरको. ३. का. ४. सं. १९.
[3] गीता. १६-२१. [4] [5]

**पा.**†'मायाः' इत्यारभ्य 'संबन्धरहिताः' इत्यन्तं पंक्तिद्वयं न-ख,
*तत्सहचारिण्यश्च श्रीरश्रीर्वाह तरो नाशयामि- इत्येव क, ख, ग, सर्वत्र पाठः। यथानिर्दिष्टमेव समन्वितमिव प्रतिभाति।

§उपैतु मां देवसखः कीर्तिश्च मनुना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिवृद्धिं ददातु मे ॥७॥

*[विद्यैश्वर्यादिप्राप्तिनिदानकीर्त्यादिकमर्थयते । हे **देवि, मां**–त्वदाश्रयं, **कीर्तिः**-विद्यैश्वर्यादिकृता प्रथा, **मणिना**-रत्नादिभिः, **सह**–युगपत, **उपैतु**-प्राप्नोतु । अहं **अस्मिन्** लोके **प्रादुर्भूतोऽस्मि**-त्वत्-प्रसादात् प्रबुद्धोऽस्मि । **कीर्तिमृद्धिं**-धनादिसमृद्धिं च **मे**-मह्यं, **ददातु**–दिशतु । सा लक्ष्मीः इति शेषः ॥] ॥ ७ ॥

क्षुत्पिपासां मलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वान् निर्णुद मे गृहात् ॥८॥

**क्षुत्**-अन्नेच्छा; [1]"क्षुत् खलु वै मनुष्यस्य भ्रातृव्यः ।" **पिपासां**–विषयस्पृहां ; तृष्णां । [2]"जीर्यन्ति जीर्यतः केशाः" इत्यादि । **क्षुत्पिपासां** इति समासो वा । उभयं नाशयामि इति संबन्धः । **मलां**-[†]मलसंबन्धाम् । **अलक्ष्मीं**–प्रतिभटरूपाममङ्गलस्वरूपाम् । **ज्ये-ष्ठाम्**–दुस्सहपत्नीम् । **अलक्ष्मीं**–दर्शनायोग्याम् । हे लक्ष्मीः, **सर्वान्**

---

[1] तै. सं. ६-१-२१. [2] इति. समु. १०-२९. [†]मलसंबद्धां लक्ष्मीप्रतिभटरूपां(?)

* अस्या ऋचः भाष्यं नोपलभ्यते । अतः काञ्चीप्रतिवादिभयङ्कर अनन्ताचार्यैः (ई. १८९९-सं.) प्रकाशितात् अज्ञातनामधेयस्य कस्यचित् भाष्यात् उद्धृत्य अत्र दीयते । तत्र च ऋक्पाठ एवमस्ति–

§उपैतु मां देवि सह कीर्तिश्च मणिना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७ ॥

एतान्, त्वत्समाश्रयणबलेन मे गृहात्—अस्मद्गृहात्, नाशयामि—त्याजयामि।

**लैङ्गे**-[1]"अलक्ष्मीश्च मया प्रोक्ता पत्नी या †दुष्षहस्य च।
नारायणपदं स्मृत्वा गच्छत्वेव न संशयः॥"

तत्र दुष्षहं प्रति—[1] "विष्णुभक्तिविनिर्मुक्ताः तदीयजननिन्दकाः।
नास्तिकाश्च शठा यत्र साहाय्यस्त्वं समाविश॥
दुष्षहोऽपि तथोक्तानि स्थानानि च समेयिवान्।
विशेषाद्देवदेवस्य विष्णोर्निन्दारतात्मनाम्॥
साहाय्यो मुनिशार्दूल सैषा ज्येष्ठा इति स्मृता॥"

**श्रीमद्रामायणे**—[2] "प्रणष्टबलिकर्मेज्यामन्त्रहोमजपानि‡ च।
दुष्कालेनेव भग्नानि भिन्नभाजनवन्ति च॥
अस्मत्त्यक्तानि वेश्मानि कैकेयी प्रतिपद्यताम्॥"

**अभूतिं**-इत्यादि। हे देवि! **अभूतिं**-गृहक्षेत्रारामदासीदासादिविभूतिनिरोधिनीं। **असमृद्धिम्**-धनधान्यस्वर्णरूप्यादिसमृद्धिविघातिनीं सर्वां पूर्वोक्तां सविभूतिकां ज्येष्ठाम्, **मे गृहात्**-त्वदाश्रयणप्रयोजनस्य मम गृहात्, मत्संबन्धिदेशविशेषात्, **निर्णुद**-त्याजय, नाशय इत्यर्थः॥ ॥८॥

---

[1] लैङ्गे. [2] रा. अ. ३३-२०, २१.

**पा.** † दुस्सहस्य-ख. ‡जयानि च-ख.

अलक्ष्म्यादीन्परानुद्य* स्वगृहात्पुनरेव ताम् ।
सर्वेश्वरीं श्रियं देवीं नवमेनाह्वयत्ययम् ॥

**गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।**
**ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥**

**गन्धद्वाराम्**-गन्धशब्देन लक्ष्मीसमाराधनोपकरणभूतानि गन्धपुष्पधूपदीपनैवेद्यानि समाराधनक्रियालंबनभूतानि सर्वाण्युपलक्ष्यन्ते । तानि यस्याः प्राप्तौ **द्वाराणि**-उपायाः; तां गन्धद्वाराम्‡ । **धनदीये**:—

[1]"गन्धं पुष्पं च धूपं च दीपं च सुमनोहरम् ।
लेह्यं मधुरसंयुक्तं शाल्यन्नं च निवेदयेत् ॥

प्रियाणि लक्ष्म्याः पुष्पाणि कमलानि विदुर्बुधाः ॥"

यद्वा, गन्धस्य—पुण्यकर्मसंभूतस्य यशसः प्रापिकाम् ; [2]§ "यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति" इति । **दुराधर्षां**-अप्रयतैरमंगलैः पूर्वोक्तोपायरहितैश्च प्राप्तुमशक्याम् । अथवा स्वसमृद्धिप्रकर्षेण सर्वैर्दुराधर्षाम् । तथा [3] "अभितः †पावकोपमम्" इति । **नित्यपुष्टां**-सर्वकालसर्वदेशसर्ववस्तुष्वपि सर्वदा पुष्टाम्। अथवा नित्यैर्गुणैर्विभूत्यादिभिः समृद्धाम् । **करीषिणीम्**-कर्षवतीम् ; मृद्वतीं वा । कर्षमृदोः मङ्गलावहत्वेन लक्ष्मीप्रियत्वं श्रुतिस्मृत्यादिषु

---

[1] धनदीये. [2] तै. उ. २. [3] रा. अ. ९९-२६. **पा.*** अपानुद्य-ख. अलक्ष्म्यादिवन्निराकृत्यास्मद्गृहात्पुनरेव तां-ख. ‡गन्धद्वारां । तथा-ख. § यथा वृक्षस्य इति श्रुतिः । अप्रयतैः-ख. † पावकोपम इति-क, ख.

प्रसिद्धम् । **ईश्वरीं सर्वभूतानाम्**-¶चतुर्मुखशिवशतमखप्रभृतिदेवासुर-सिद्ध*गन्धर्वमनुजानां सर्वेषां भूतानां नित्यसूरीणां च, ईश्वरीं-नियन्त्रीं, स्वामिनीं । †निरुपाधिकमैश्वर्यं यस्य स ईश्वरः । "ईश ऐश्वर्ये" इति धातोः [1]"स्थेशभासपिसकसो वरच्" इति 'वरच्'-प्रत्यये ईश्वरशब्दो निष्पन्नः । यद्वा 'अशू व्याप्तौ' इति धातोः [2]"ईच्चोपधाया" इति अकारस्थाने ईकारे वरच्प्रत्यये च, ईश्वरशब्दो निष्पन्नः व्यापित्ववाची । तथाऽत्र सर्वभूतेश्वरीं सर्वभूतनियन्त्रीं, व्यापिनीं वा । [3]"ईशाना देवी भुवनस्य" इत्यस्मिन् मन्त्रे 'भुवन'शब्दः चिदचिदात्मकसर्वभूतपरः । [4]"अस्येशाना जगतो विष्णुपत्नी" इति अस्मिन् मन्त्रेऽपि जगच्छब्दस्सर्वभूतपरः; तदैकार्थ्यं गन्धद्वारामिति मन्त्रे द्रष्टव्यम् । उपबृंहिता चेयं **श्रीवैष्णवे पुराणे** :—

[5]"नित्यैवैषा जगन्माता विष्णोः श्रीरनपायिनी ।
यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम ॥" इति ।

अन्यत्रापि [6]"त्वयैतद्विष्णुना चाम्ब जगद्व्याप्तं चराचरम् ॥ " इति । भगवच्छास्त्रवचनैश्च उपबृंहितेयं श्रुतिः । यथा विष्वक्सेनाय भगवान् आह—[7]"तथा लक्ष्म्याः प्रभावं च वक्ष्ये शृणु समाहितः ।
गुणतश्च स्वरूपेण व्याप्तिस्साधारणी मता ॥

---

[1] अष्टा. ३-२-१७५. [2] अष्टा. उणादि. ५-७३४. [3] तै. काठ. ३-३-१२. [4] तै. सं. ४-४-१२. [5] वि. पु. १-८-१७. [6] वि. पु. १-९-१२६. [7] विष्वक्. सं.(?)

**पा.** ¶ चतुर्मुखवासवादि-ख. *गन्धर्वमनुजादीनां सर्वेषां ईश्वरीं-ख. †'निरुपाधिकमैश्वर्यं' इत्यारभ्य 'इहोपह्वये' इत्यन्तं २९ पंक्तयः न-ख.

यथा मया जगद्व्याप्तं स्वरूपेण स्वभावतः ॥
तथा व्याप्तमिदं सर्वं नियन्त्री च तथेश्वरी ॥*
यथा मया हि सा व्याप्ता तया व्याप्तोऽहमीश्वरः ॥''

अन्यत्र :-[1] "अस्या मम च शेषं हि विभूतिरुभयात्मिका ॥'' इति ।[‡]

ननु "ईश्वरीं सर्वभूतानां'' इत्यत्र 'ईश्वरी'इति पदं ईश्वरपत्नीत्वपरं किं न स्यादिति चेन्न—सर्वभूतानामिति षष्ठ्यन्तपदानन्वयः स्यात् । षष्ठ्यन्तपदस्य पदान्तरोपसर्जनेनेश्वरशब्देन कथमन्वयः । पदार्थः पदार्थेन संबद्ध्यते, न तु तदेकदेशेन इति व्युत्पत्तिविरोधात् । 'ईश्वरीं' इत्यत्र ईश्वरपदस्य अन्यान्वितत्वेन निराकांक्षत्वाच्च न षष्ठ्यन्तपदान्वयः । साकांक्षयोरेव परस्परान्वयः; न तु निराकांक्षयोः, निराकांक्षस्य साकांक्षेण वेति । अत एव 'गाढे पङ्कजं' 'गभीरे सरसिजं' इति 'गाढ'-'गभीर'पदयोः 'पङ्क''सरो'ऽन्वयाभिप्रायेण न प्रयोगः । अत एवात्र सर्वभूतेश्वरत्वमेवाभिप्रेतम् ॥

**ताम्**—उक्तगुणलक्षणाम् । **इहोपह्वये**[†]—पूर्वमलक्ष्म्यादिदूषिते इदानीं तत्त्यागात् देव्यागमनयोग्ये, **उपह्वये**—सर्वसमृद्ध्यर्थमाह्वयामि ।[‡] **श्रियं**—'श्री श्रये' इति सर्वाधारत्वं; पुरुषकारत्वेनोपायत्वेन चाश्रीयमाणत्वम् । 'शॄ हिंसायां' इति आश्रितदोषनिवर्तकत्वम् । 'श्रु श्रवण' इति आश्रितानामार्तनादं स्वयं श्रुत्वा, भगवन्तं प्रति श्रावकत्वम् ।

---

[1] विष्वक्. सं. **पा.** [‡]इत आरभ्य, 'अलमतिविस्तरेण' इत्यन्तं न । अतः परं 'कामानां दशमे' इति वर्तते । दशमी ऋक् प्रारभ्यते–ख. *इति इत्यधिकः–ग.

'श्रा परिपाक' इति आश्रितदोषानपहाय, [1]"श्रीणाति च गुणैर्जगत्" इति आश्रितगुणपूरकत्वम् । एवमादयो धर्माः सूचिताः 'श्री'शब्देन । तथा च भगवच्छास्त्रे—

[1]"शृणाति निखिलान् दोषान् श्रीणाति च गुणैर्जगत् ।
श्रीयते चाखिलैर्नित्यं श्रयते च परं पदम् ॥" इति ॥

तथा चोक्तगुणविशिष्टां इत्यर्थः ॥

ननु [2]"सर्वस्य प्रभुमीशानं" [3]"विश्वस्येशानं वृषभं मतीनां," [4]"एष सर्वेश्वर एष *भूतपतिः" [5]"ईशानः †सर्वभूतानामीश्वरः सर्वभूतानां," [6]"पतिं विश्वस्यात्मेश्वरं," [7]"सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुः," [8]"तमीश्वराणां परमं महेश्वरं," *इत्यादिश्रुतिभिः भगवत एव सर्वेश्वरत्वं प्रतीयते । तत् कथं देव्याः सर्वेश्वरत्वं, बहुप्रमाणविरोधात्, [9]"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति श्रुतावेव भूमिसाधारणतया भगवच्छेषत्वप्रतिपादनाच्च† । देव्याः सर्वेश्वरत्वे, भगवत्साम्यापत्त्या [10]"न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतिविरोधात्, [11]"एकः शास्ता न द्वितीयोऽस्ति शास्ता" इति शासित्रन्तरनिषेधपरश्रुतिविरोधाच्च । देव्याः श्रूयमाणं सर्वभूतेश्वरत्वं विभूतिद्वयशेषित्वरूपतया अन्यथा नेयमिति चेत् ।—

---

[1] अहि. सं. [2] श्वे. ३-१७. [3] तै. आर. ३-१५-४६. [4] बृ. ६-४-२२. [5] तै. उ. २-४७. [6] तै. नार. [7] अथर्वशि-२-१७. [8] श्वे. ६-७. [9] तै. आर. ३-१३-४१. [10] श्वे. ६-८. [11] भार. आश्व-२७-१. (?)

**पा.** *भूताधिपतिः †सर्वविद्यानां *इत्यादिभिः–ग. †भगवत्साम्यापत्त्या–ग.

अत्रेदं तत्त्वम्– [1]“सदेव सोम्येदमग्र आसीत्” [2]“ब्रह्म वा इदमग्र आसीत्,” [3]“आत्मा वा इदमेक एवाग्र आसीत्,” [4]“एको ह वै नारायण आसीत्” इत्यादिकारणवाक्येषु ‘सत्’ ‘ब्रह्म’ ‘आत्म’‘नारायण’शब्दाः छागपशुन्यायेन सामान्यविशेषभावतया, नारायणे देवताविशेषे पर्यवसन्नाः यथा, तद्वत्, [5]“श्रद्धया देवो देवत्वमश्नुते,” [6]“श्रद्धा प्रतिष्ठा लोकस्य देवी” इत्यादिके [7]“ईशाना देवी भुवनस्याधिपत्नी,” [8]“अस्येशाना जगतो विष्णुपत्नी,” [9]“ईश्वरीं सर्वभूतानां” इति वाक्येषु श्रूयमाणः ‘श्रद्धा’‘विष्णुपत्नी’ ‘श्री’शब्दाः सामान्यविशेषभावतया तन्न्यायेन लक्ष्मीरूपे देवताविशेषे पर्यवसन्नाः ॥

तथा हि—यथा सच्छब्दस्य बृहदबृहत्साधारणस्य ‘ब्रह्म’ शब्दोदिते विशेषे पर्यवसानम्, ‘ब्रह्म’शब्दस्य चेतनाचेतनसाधारणस्य ‘आत्म’शब्दोदिते चेतने पर्यवसानम्; ‘आत्म’शब्दस्य च जीवेश्वरसाधारणस्य च ‘नारायण’शब्दोदिते देवताविशेषे पर्यवसानं यथा, तद्वत् ‘श्रद्धा’शब्दस्य चेतनाचेतनसाधारणस्य ‘विष्णुपत्नी’शब्दोदितायां देवतायां पर्यवसानम् । ‘विष्णुपत्नी’शब्दस्यापि *श्रीभूमिसाधारणस्य ‘श्री’शब्दवाच्यायां लक्ष्म्यां पर्यवसानं युक्तम् । ततः त्रयाणां

---

[1] छा. ६-२-१. [2] बृ. ३-४-११. [3] ऐतरेय. १-१-१. [4] महोप. १-१.
[5] तै. काठ. ३-३-९. [6,7] तै. काठ. ३-३-१२.
[8] तै. सं. ४-४-१२. [9] तै. उ. २.

**पा.** *श्रीभूमिशब्दसाधारणस्य—क.

वाक्यानामैककण्ठ्यावश्यंभावात् लक्ष्म्याः सर्वभूतेश्वरत्वं सिद्धम् । तदपि अनन्याधीनत्वरूपं मुख्येश्वरत्वं पतिवत् ॥

नन्वेवं श्रियोऽप्यनन्याधीनत्वे पतिवन्मुख्येश्वरत्वे, सर्वागमानामेकेश्वरपरत्वाभावादैककण्ठ्यं न स्यादिति चेन्न । अन्योन्येच्छाविघातकयोः अन्योन्यगुणप्रधानभावगन्धरहितयोः अन्योन्यसाहित्यानादरेण जगद्व्यापारेषु पृथक् पृथक् प्रवृत्तिमतोर्द्वयोरीश्वरयोः प्रतिपादने ह्यागमानामैककण्ठ्यहानिः । इह त्वनयोर्दांपत्यादिवचनबलात् अन्योन्येच्छाविघातराहित्ये समप्रधानभावराहित्ये जगद्व्यापारेषु पृथक्प्रवृत्तिराहित्यादौ च सर्वागमानां तात्पर्याभ्युपगमात्, ऐककण्ठ्यमुपपन्नम् । सर्वागमानामीश्वरव्यक्त्यैक्यपरत्वरूपमैककण्ठ्यं ह्यत्र दुरुपपादं ; श्रीश्रीशविषयसर्वभूतेश्वरत्ववचनयोर्द्वयोरपि तुल्यबलत्वेन, तयोरन्यतरस्याप्यन्यथा नेतुमशक्यत्वात् । अतो दंपत्योरन्योन्येच्छाविघातादिराहित्ये तात्पर्यं वा ; पत्युः प्रधानत्वेन प्रधानैक्यतात्पर्यं वा सर्वागमानामैककण्ठ्यमित्येव तेषामैककण्ठ्यं निर्वाह्यम् ।

किञ्च यथा पतिः सर्वचेतनाचेतनतत्त्वनियन्ता, तथा देव्यपि सर्वचेतनाचेतनतत्त्वनियन्त्री । यथा च पतिरनन्याधीनस्वरूपस्थितिप्रवृत्तिकः, तथा देव्यप्यनन्याधीनस्वरूपस्थितिप्रवृत्तिकैव । अत उभयोरप्यैश्वर्यमत्यन्तसमानम् । एवं देव्याः सर्वनियन्तृत्वेऽपि, यथा पत्युरीशितव्यराश्यनन्तर्भावात् तं प्रति देव्या नियन्तृत्वप्रसक्तिर्नास्ति, तथा देव्या अपि तद्राश्यनन्तर्भावादेव देवीं प्रति तस्यापि नियन्तृत्वं

नास्त्येव । अतो यथा भगवतो नियन्त्रन्तराभावेन तदैश्वर्यं स्वापेक्षयोत्कृष्टावधिरहितं, तथा देव्या अपि नियन्त्रन्तराभावात् तदैश्वर्यमपि स्वापेक्षया उत्कृष्टावधिरहितम् । उक्तार्थे प्रमाणं च, बलाबलवैषम्यनियामकाभावेन समतुलारूढं परस्परबाधाद्यनर्हं उभयोरप्यविशिष्टं सर्वभूतेश्वरत्ववचनम् । अपि च भगवत ईश्वरतत्त्वरूपत्वेनेशितव्यतत्त्वेष्वनन्तर्भावात्, तद्व्यतिरिक्तविषयमेव देव्या ऐश्वर्यमिति वक्तव्यम् । ऐश्वर्यं हि ईशितव्यवस्तुमात्रप्रतिसंबन्धिकम् । न त्वीश्वरवस्तुप्रतिसंबन्धिकमपि, अयोग्यत्वात् । न च तावता तस्या अनवधिकातिशयत्वहानिः । ईशितव्यकृत्स्नप्रतिसंबन्धिकत्वादेव तदुपपत्तेः, स्वापेक्षया उत्कृष्टावधिराहित्याच्च । भगवदैश्वर्यमपि हि न देवीप्रतिसंबन्धिकम्, येन तदुत्कृष्टावधि स्यात् । पतिवत् देव्या अपि ईश्वरतत्त्वरूपत्वेन तन्न्यायसाम्यात् इति ॥

तदेवं स्तोत्ररत्ने भगवत इव देव्याः **चतुःश्लोक्यां** स्वाभाविकानवधिकातिशयेशितृत्वरूपं पतिवत् मुख्यमीश्वरत्वं **यामुनाचार्यैः** कण्ठरवेण प्रतिपादितम् । [1]"स्वाभाविकानवधिकातिशयेशितृत्वं
नारायण त्वयि न मृष्यति" इति ।

[2]"यस्यास्ते महिमानमात्मन इव त्वद्वल्लभोऽपि प्रभु-
र्नालं मातुमियत्तया निरवधिं नित्यानुकूलं स्वतः ।" इति ।

**भगवद्भाष्यकारैरपि पृथुगद्ये** [3]"भगवन्नारायणाभिमतानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्यनवधिकातिशयासंख्येयकल्याणगुणगणां" इति,

---

[1] स्तोत्ररत्ने. १२. [2] चतुःश्लो. २. [3] (पृथु)शरणा–ग.

**वेदार्थसंग्रहे** च [1]"अभिमतस्वानुरूपस्वरूपरूपगुणविभवैश्वर्यशीलाद्य-नवधिकमहिममहिषी" इति प्रतिपादितम् । **श्रीवत्सचिह्नमिश्रैरपि** [2]"देवि त्वन्महिमावधिर्न हरिणा नापि त्वया ज्ञायत" इति अनवधि-कमाहात्म्यं प्रतिपादितम् । तदात्मजैश्च **भट्टपराशरपादैः**—

[3]"अस्येशाना जगत इति ते धीमहे यां समृद्धिं
श्रीश्रीसूक्तं बहुमुखयते तां च शाखानुशाखम् ।" इति ॥

एवमनन्याधीनत्वेन पत्या समस्वातन्त्र्यं कण्ठरवेण वर्णितं **श्रीगुणरत्नकोशे** [4]"युवयोः स्वातन्त्र्यमत्यङ्कुशं" इति । [5]"सर्वस्य प्रभुमीशानं" इत्यादिवाक्येषु, देवीविषयवचनेषु [6]"अस्येशाना" इत्या-दिषु[च]'ईशाने'ति चानश्प्रत्ययेन स्वाभाविकेश्वरत्वमवगम्यते; अनन्या-धीनत्वमिति यावत् । एवं सर्वभूतेश्वरत्ववचनसाम्यात् द्वयोरपि मुख्ये-श्वरत्वस्य दुरपह्नवत्वेन, सर्वागमानामीश्वरव्यक्त्यैक्यपरत्वेऽनुपपन्ने, सर्वा-गमानामैककण्ठ्यमन्योन्येच्छाविघातादिनिवृत्तौ तात्पर्यमुखेनोपपन्नमस्तु इत्यर्थः ॥

ननु पतिविषये सर्वभूतेश्वरत्ववचने 'सर्व'शब्दः श्रियमपि संगृ-ह्णाति ; पत्नीविषये तु पतिव्यतिरिक्तपरः । तत्कथमत्र सर्वभूतेश्वरत्व-वचनसाम्योक्तिरिति चेदुच्यते—पतिविषयवचनेऽपि 'सर्व'शब्दो देवी-व्यतिरिक्तपरः । ईश्वरत्वेन श्रूयमाणायास्तस्या ईशितव्यपरे तस्मिन्

---

[1] वेदा. सं. [2] श्रीस्तव. ८.
[3] श्रीगुणर. १३. [4] श्रीगुणर. ५३. [5] श्वे. ३-१७. [6] तै. सं. ४-४-१२.

संग्रहीतुमशक्यत्वात्। ब्रह्मरुद्रादीनां त्वीश्वरत्वेन श्रुतानामपि कार्यत्वकर्मवश्यत्वादिभिरनीश्वरत्वनिश्चयात् तत्र संग्रहो युज्यते । तथाऽत्र संकोचाभावात् अस्या ईश्वरत्वं पतिवदनवधिकातिशयमेव श्रुतिसिद्धं तिष्ठतीति नास्यास्तत्र सर्वशब्दे संग्रहः शक्यः । जगदीश्वरत्वेऽपि, पतिं प्रति नियाम्यत्वात्, अस्या अपि तस्मिन् 'सर्व'शब्दे संग्रहः स्यादिति चेन्न— उभयत्र 'सर्व'शब्दे तुल्ये श्रूयमाणे, तस्याः तं प्रति नियाम्यत्वनिश्चयायोगात् । अन्यथा वैपरीत्यस्यापि प्रसङ्गात् । एकः 'सर्व'शब्दः संकुचितविषयः, अन्यस्तु न तथेत्यत्र विनिगमकाभावेन, उभयोरपि तुल्यविषयत्वस्यैव न्याय्यत्वात् । तत्र च द्वयोरप्यन्योन्यनियन्तृत्वस्य दुर्वचत्वात्, उभावपि सर्वशब्दौ उभयव्यतिरिक्तपरौ तिष्ठतः । तथा च सर्वभूतेश्वरत्ववचनसाम्यसिद्धिः । एवं देव्या अपि सर्वभूतेश्वरत्वश्रुतिसद्भावात् तां प्रति भगवतो नियन्तृत्वासंभवेन, तदैश्वर्यापेक्षया भगवदैश्वर्यमपि नोत्कृष्टमित्ययमर्थः भगवद्भाष्यकारैः प्रतिपादितः [1] "अनवधिकातिशय" इति । स्थापितं चैतच्छ्रीवत्सचिह्नमिश्रैः भट्टपराशरपादैश्च ॥

ननु श्रियोऽपि 'नार'शब्दार्थत्वेन भाष्यकारादिभिर्व्याख्यानात्, तेन तस्यास्तं प्रति नियाम्यत्वसिद्धेः, 'नार'शब्दस्वरूपश्रुतिरत्र सर्वशब्दयोरतुल्यविषयत्वे *विनिगमका स्यादिति चेन्न—'नार'शब्दस्य

---

[1] पृथुगद्ये. पा. *विनिगमिका.–ग.

श्रीमात्रविषयत्वाभावेन सामान्यवचनरूपत्वात् । तेन विशेषवचनसंकोचायोगात् । श्रीविषयविशेषवचनसिद्धसर्वभूतेश्वरत्वसामर्थ्येन, तस्यास्तं प्रति नियाम्यत्वाभावे सिद्धे, सामान्यवचनरूपस्य 'नार'शब्दस्य तदनुरोधेन निर्वहणस्यैव न्याय्यत्वात् । अतोऽस्या 'नार'शब्दार्थत्वं [1]"नरसंबन्धिनो नारा" इति व्युत्पत्तिमात्रेण ; न तु †[2]"नराज्जातानि" इति व्युत्पत्त्या । संबन्धश्चात्र पतिपारार्थ्यमात्रं, न तु स्वतो नियाम्यत्वं; उक्तरीत्या तस्य विशेषवचनबाधितत्वात् ॥

अस्याः ‡'नार'शब्दार्थत्वमेतावन्मात्रेणैवेति एतेन एतदपि निरस्तम् : [3]"ह्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति पत्नीत्वेन शेषभूताया ‖नियाम्यत्वस्य कल्पयितुमुचितत्वात्, इदं वचनमत्र विनिगमकं स्यात् इति । पत्नीत्वेन शेषत्वेऽपि, सर्वभूतेश्वरत्वश्रुतिविरोधेन स्वतो §नियाम्यत्वकल्पनस्यैवानवकाशात् । किञ्च पत्नीत्वस्य विग्रहविशिष्टधर्मत्वेन बहिरङ्गत्वं, नियन्तृत्वस्य स्वरूपधर्मत्वेनान्तरङ्गत्वात् । विग्रहविशिष्टतया बहिरङ्गभूतेन वचनेनान्तरङ्गवचनस्य सङ्कोचायोगात् । न हि विग्रहरहितस्याऽऽत्मस्वरूपमात्रस्य पत्नीत्वं लोके वेदे वा दृष्टचरम् । तस्मादन्तरङ्गवचनस्थकण्ठोक्तिसिद्धसर्वभूतेश्वरत्वसामर्थ्येन स्वतन्त्रत्वे

---

[1] अहि. सं. ५२-५०. [2] भार. आनु. १८६-७. (अष्टा. ब्र. १-३५.)
[3] तै. आर.३-१३.

**पा.** †नराज्जातानि तत्त्वानि–ग. ‡ अस्य नार.........त्वमेव ताव. क. नारशब्दार्थत्वं तावन्मात्रेण–ग. ‖ नियोज्यत्वस्य–ग. § नियोज्यत्व–ग.

निश्चिते, स्वतन्त्रयोरपि तयोरन्योन्येच्छया पतिपत्नीभाव इति पत्नीत्वस्य तदनुरोधेन निर्वहणं न्याय्यम् । तथैव भट्टपराशरपादैः [1]¶ "तं च त्वत्कं पतिमधिजगावुत्तरश्चानुवाक" इति निर्व्यूढम् ।

ननु [2]"न तस्येशे कश्चन" इति पत्युरीश्वरान्तरनिषेधो दृश्यते । तथा च पतिमात्रस्येश्वरान्तरनिषेधबलात् चेतनान्तरवत् पत्न्या अपि सेश्वरत्वसिद्ध्या, पत्यावैश्वर्यविश्रमस्य स्वीकर्तव्यत्वात्, अस्याः सर्वभूतेश्वरत्ववचनं संकोचनीयम् । [3]"न तत्समश्चाभ्यधिकश्च दृश्यते," [4]"एकः शास्ता न द्वितीयोऽस्ति शास्ता" इत्यादिभिस्तत्सदृशनिषेधाच्च । अत इदं वचनजातमत्र विनिगमकमिति चेन्न—तस्य निषेधरूपत्वेन धर्मिग्राहकमुपजीव्योदेतव्यत्वात् सर्वभूतेश्वरत्ववचनस्य च धर्मिग्राहकत्वात् । ईश्वरे सिद्धे हि, तस्येश्वरान्तरं सदृशं च निषेद्धव्यम् । न हि भूतलादिधर्मिणि अगृहीते, तत्र घटादिकं निषेद्धुं शक्यम् । अतः सर्वभूतेश्वरत्वसिद्धिवेलायां, [5]"न तस्येशे कश्चन" इत्यादेरनुदयात्, तस्य श्रीविषयसर्वभूतेश्वरत्ववचनसंकोचकत्वं न संभवति । ततश्च पूर्वोक्तरीत्या द्वयोरप्यविशेषेण प्रथमं सर्वभूतेश्वरत्वे निश्चिते, तदुपजीवनेन प्रवृत्तः पत्युः सदृशनिषेधस्तदनुरोधेन नेतव्यः । एवंविधपत्न्यादिविशिष्टत्वेन सदृशः कश्चिदन्यो नास्तीति । एतत्सर्वमभिप्रेत्य वेदार्थसंग्रहे भगवद्भाष्यकारैः 'महिषी'शब्दं प्रयुञ्जद्भिः निर्व्यूढम् [6]"अनवधिकमहिम-

---

[1] श्रीगुणर. १३. [2] तै. नारा. [3] श्वे. ६-८. [4] भार. आश्व. २७-१.
[5] तै. नारा. [6] वेदार्थसं. पा. ¶स्थापितं च त्वत्कं पतिमधिजगाम—ग.

महिषी'' इति । पतिमात्रस्य ईश्वरान्तरनिषेधश्च तस्य नियन्त्रन्तरं नास्तीत्येतावन्मात्रमभिधत्ते, न तु तदन्यस्य सेश्वरत्वमपि; तावत्पर्यन्त-बोधने सामर्थ्याभावात्, तत्कल्पने गौरवात्, देव्याः सर्वभूतेश्वरत्वश्रुति-विरोधेन तत्कल्पनानवकाशाच्च । अतो देव्याः सर्वभूतेश्वरत्वादिश्रुति-स्वारस्यसंकोचकाभावात्, दंपत्योस्सर्वभूतेश्वरत्वादिवचनसाम्यं सिद्धम् ॥

उपबृंहणान्यपि देव्याः पतितुल्यैश्वर्यप्रतिपादनेन तयोः सर्वभूते-श्वरत्वादिवचनसाम्यं दृढीकुर्वन्ति । यथा भगवच्छास्त्रे [1]''सर्वैश्वर्यगुणो-पेता नित्यं तद्धर्मधर्मिणी ।'' इति । अस्यार्थः—सर्वेश्वरत्वधर्मविशिष्टा, नित्यं-सर्वकालेषु, तद्धर्मधर्मिणी-तच्छब्देन भगवानुच्यते; तद्धर्माः—शारीरकाध्यायचतुष्टयविवक्षितकारणत्वाबाध्यत्वोपायत्वोपेयत्वसर्वान्तर्या-मित्वसर्वशरीरित्वादयो धर्माः देव्या अपि धर्मा इति 'तद्धर्मधर्मिणी' इत्युक्तम् ॥

देव्याः सर्वव्यापकत्वसर्वान्तर्यामित्वसर्वनियन्तृत्वादिप्रतिपादकानि श्रीविष्णुपुराणभगवच्छास्त्रवचनानि प्रागेव दर्शितानि । अन्यान्यपि वचनानि विलिख्यन्ते :—

***श्रीमदहिर्बुध्न्यसंहितायां द्वितीयेऽध्याये**

> ''षाड्गुण्यं तत्परं ब्रह्म स्वशक्तिपरिबृंहितम् ।
> 'बहु स्यां' इति संकल्पं भजते तत्सुदर्शनम् ॥ ६२ ॥''

---

1 भगवच्छास्त्रे

तृतीयेऽध्याये नारदः—

"षाड्गुण्यं तत्कथं ब्रह्म स्वशक्तिपरिबृंहितम् ।
तस्य शक्तिश्च का नाम यया बृंहितमुच्यते ॥ १ ॥

अहिर्बुद्ध्यः—"एवं भगवतस्तस्य परस्य ब्रह्मणो मुने ॥ ४ ॥
सर्वभावानुगा शक्तिर्ज्योत्स्नेव हिमदीधितेः ।
भावाभावानुगा तस्य सर्वकार्यकरी विभोः ॥ ५ ॥
[1]* स्वात्मबुद्धिस्समुन्मीलत्परावरजगत्स्थितिः ॥ ७ ॥
नित्या कालापरिच्छेदात्पूर्णाकाराऽवियोगतः ।[2]
व्यापिनी देशविभ्रंशाद्रिक्ता पूर्णा च सर्वदा ॥ ८ ॥
जगत्तया लक्ष्यमाणा सा लक्ष्मीरिति गीयते ।
श्रयन्ती वैष्णवं भावं सा श्रीरिति निगद्यते ॥" ९ ॥ इत्यारभ्य,

"उदधेरिव च स्थैर्यं महत्तेव विहायसः ।
प्रभेव दिवसेशस्य ज्योत्स्नेव हिमदीधितेः ॥ २३ ॥
विष्णोः सर्वाङ्गसंपूर्णा भावाभावानुगामिनी ।
शक्तिर्नारायणी दिव्या सर्वसिद्धान्तसंमता ॥ २४ ॥
[3] देवाच्छक्तिमतो भिन्ना ब्रह्मणः परमेष्ठिनः ।
एष चैषा च शास्त्रेषु धर्मधर्मिस्वभावतः ॥ २५ ॥

---

पा. *दीयमानाः पाठभेदाः मदरास् अड्यार् यन्त्रालये(ई. १९१६) मुद्रितायां अहिर्बुद्ध्यसंहितायां उपलभ्यमानाः । [1] स्वात्मभित्तिसमुन्मीलत् । [2] पूर्णाऽऽकारवियोगतः [3] देवी शक्तिमतो भिन्ना—ग.

भवद्भावस्वरूपेण तत्त्वमेकमिवोदितौ ॥ २६ ॥
भवद्भावात्मकं ब्रह्म ततस्तच्छास्त्रगं परम् ।
भवान्नारायणो देवो भावे लक्ष्मीरहं परा ॥
लक्ष्मीनारायणाख्यं तदतो ब्रह्म सनातनम् ।
स्वातन्त्र्येण स्वरूपेण विष्णुपत्नीयमद्भुता ॥ २८ ॥

. . . . . . . . . . .

. . . . . . . . . . .

नारायणः स विश्वात्मा भावाभावमिदं जगत् ॥ ४१ ॥
निष्कलेन स्वरूपेण [1]यथा व्याप्य नियच्छति ।
सर्वभावात्मिका लक्ष्मीरहन्ता परमात्मिका ॥ ४२ ॥
तद्धर्मधर्मिणी देवी भूत्वा सर्वमिदं जगत् ॥ ४३ ॥
निष्कलेन स्वरूपेण साऽपि [2]तत्त्वं नियच्छति" ॥ ४४ ॥

इत्यादिकमुक्तं ।

**षष्ठेऽध्याये** "ताविमावेकधैवोक्तौ भेद्यभेदकभावतः ।
[3]पृथक्त्वेन तु शास्त्रेषु जगद्धेतुतयोदितौ ॥ २ ॥
नैव शक्त्या विना कश्चिच्छक्तिमानस्ति कारणं ।
न च शक्तिमता [4]शक्तिर्विना काऽप्यवतिष्ठते ॥ ३ ॥
तत्तद्गौरवमाश्रित्य तन्त्रवेदान्तपारगैः ।
जगद्धेतुतया देवावेकैकाविव दर्शितौ" ॥ ४ ॥

---

[1] यदा प्राप्य. [2] तद्वत्. [3] पृथक्त्वेन च–ग. [4] शक्तिर्विनैका.

सप्तमेऽध्याये "एका शक्तिर्हरेर्विष्णोः सर्वभावानुगामिनी ।
देवी षाड्गुण्यपूर्णा या[1] ज्ञानानन्दक्रियामयी" ॥६५॥

एकविंशेऽध्याये "तद्धर्मधर्मिणीं शक्तिं ब्रह्मणोऽनपगामिनीम् । ७ ॥
ज्ञानशक्तिबलैश्वर्यवीर्यतेजःप्रभावतीम् ॥ ९ ॥
अनन्तानन्तरूपां तामभेद्यां सर्वभेदिनीम्" ॥१०॥ इत्यादि ॥

लक्ष्मीतन्त्रे प्रथमेऽध्याये :—

"एषैव सृज्यते काले सैषा पाति जगत्त्रयम् ।
जगत्संहरते चान्ते तत्तत्कारणसंस्थिता ॥
मातरं जगतामेतामनाराध्य महत् कुतः ॥" इत्यादि ।

द्वितीयेऽध्याये श्रीरुवाच—

ज्ञानात्मकं परं रूपं ब्रह्मणो मम चोभयोः ।
शेषमैश्वर्यवीर्यादिज्ञानधर्मः सनातनः ॥ २५ ॥
अव्याहतिर्यदुद्यन्त्यास्तदैश्वर्यं परं मम ।
जगत्प्रकृतिभावो मे यः सा शक्तिरुदीर्यते ॥ २८ ॥
सृजन्त्या यच्छ्रमाभावो मम तद्बलमिष्यते ।
भरणं यच्च कार्यस्य [2]बलं तस्य प्रचक्षते ॥ २९ ॥
विकारविरहो वीर्यं प्रकृतित्वेऽपि मे सदा ॥ ३० ॥
स्वभावं हि जहात्याशु पयो दधिसमुद्भवे ।
जगद्भावेऽपि सा नास्ति विकृतिर्मम नित्यदा ॥ ३१ ॥

---

[1] पूर्णा सा. [2] बलं तच्च.

सहकार्यनपेक्षा मे सर्वकार्यविधौ हि या ।
तेजः षष्ठं गुणं प्राहुस्तमिमं तत्त्ववेदिनः'' ॥ ३३ ॥ इति ।

**तृतीयेऽध्याये** ''नित्यनिर्दोषनिस्सीमकल्याणगुणशालिनी ।
अहं नारायणी नाम [1]साऽहन्ता वैष्णवी परा ॥ १ ॥
देशात्कालात्तथा रूपात्परिच्छेदो न मे स्मृतः ।
संविदेव च मे रूपं [2]सर्वैश्वर्यादिको गुणः ॥ २ ॥
अहं संविन्मयी [3]पूर्णा व्यापिन्यपि पुरन्दर ॥ ८ ॥
अधिष्ठाय गुणान्सृष्टिस्थितिसंहारकारिणी ।
निर्गुणाऽपि गुणानेतानधिष्ठायाऽऽत्मवत्तया[4] ॥ ९ ॥
चक्रं प्रवर्तयाम्येका सृष्टिस्थित्यन्तरूपकम् ॥ १० ॥
ईशो नारायणो ज्ञेय ईशता तस्य चाप्यहम् ।
ईशितव्यं च विज्ञेयं चिदचिच्च पुरन्दर'' ॥ १४ ॥ इति ।

तत्रैव [5]''ईशाऽहमीशितव्येन स च देवः सनातनः ।
ईशितव्यं द्विधा प्रोक्तं चिदचिद्व्यतिरेकतः ॥ २२ ॥
विभक्ते अपि ते एते शक्ती चिदचिदात्मके ।
मत्स्वाच्छन्द्यवशेनैव मम रूपे सनातने'' ॥ २४ ॥ इति ।

**चतुर्थेऽध्याये** ''पूर्णषाड्गुण्यरूपत्वात् साऽहं भगवती स्मृता ॥४८॥
मत्तः प्रक्रियते विश्वं प्रकृतिश्चास्मि कीर्तिता'' ॥ ५१ ॥

---

**पा.**[1] सा सत्ता-ग. [2] नैवैश्वर्यादिको. [3] पूर्वव्यापि. [4] आत्मवाञ्छया.
[5] ईशो हि.

**पञ्चमेऽध्याये** "महान्नाम समाख्यातः विकारः [1]पूर्वको विधेः ॥४०॥
महान्तमाविशाम्येनं प्रेरयामि [2]स्वसृष्टये ।
प्रेर्यमाणात्ततस्तस्मादहंकारश्च जग्मिवान् ॥ ४४ ॥
आविश्यामुमहंकारं सृष्टये प्रेरयाम्यहम्" ॥ ४६ ॥ इत्यादिना
"महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्ति ते ।" *इत्यादितन्मात्रादिसृष्टिक्रमेण विस्तरेण देव्याः जगद्व्यापारः उक्तः ।

**अष्टमेऽध्याये** "एकधा च द्विधा चैव तैस्तैस्तत्त्वाब्धिपारगैः ।
व्यपदिश्यावहे शास्त्रे तावावां सर्वकारणम् ॥"

**द्वादशे** "स्वतन्त्रा [3]विश्वसिद्धीनां हेतुश्चात्र महाद्भुतः ।
शक्तिर्नारायणस्याहं नित्या देवी सदोदिता ॥ १२ ॥
तस्या मे पञ्चकर्माणि नित्यानि त्रिदशेश्वर ।
[4]स्थिरो भावस्तथा सृष्टिः स्थितिः संहृतिरेव च ॥
अनुग्रह इति प्रोक्तं मदीयं कर्मपंचकम्" ॥ १४ ॥

**त्रयोदशेऽध्याये** "आत्मभित्तौ जगत्सर्वं स्वेच्छयोन्मीलयाम्यहम् ॥२१॥
मयि लोकाः स्फुरन्त्येते [5]जाले शकुनयो यथा ॥ २२ ॥
नायिका सर्वशक्तीनां सर्वलोकमहेश्वरी ॥"

**सप्तदशे** "कान्तस्य देवदेवस्य विष्णोः सद्गुणशालिनः ॥ ३० ॥

---

[1] पूर्वकैर्बुधैः [2] सिसृक्षया. [3] विश्वसिद्धानां. [4] तिरोभावः. [5] जले.

*इत्यतो-क.

[1]दयिताहं सदा देवी नित्यं तद्धर्मधर्मिणी ॥ ३१ ॥

ईश्वरीं सर्वभूतानां पद्माक्षी पद्ममालिनी । ३२ ॥

नायिका सर्वशक्तीनां सर्वलोकमहेश्वरी ॥ ३४ ॥

महिषी देवदेवस्य सर्वकामदुघा विभोः ।

तुल्या गुणवयोरूपैर्मनः[2]प्रमथनैर्हरेः ॥ ३५ ॥

करोमि सकलं कृत्यं नित्यं तद्धर्मधर्मिणी ।

साऽहमङ्कस्थिता विष्णोर्देवदेवस्य शार्ङ्गिणः ॥ ३६ ॥

लालिता तेन चात्यन्तं सामरस्यमुपेयुषी ॥" ३७ ॥

सप्तविंशे "कर्मणा मनसा वाचा देवदेवं जनार्दनम् ।

प्रपन्नः शरणं शश्वन्मां च तद्धर्मधर्मिणीम् ॥" ४१ ॥

अष्टाविंशे "लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ।

रक्षकः सर्वसिद्धान्ते वेदान्तेऽपि च गीयते ॥" २४ ॥

इत्यादि ।

एवं श्रुतिस्मृत्यागमवचनैर्देव्याः सर्वेश्वरत्वं सिद्धम् । तच्चाव्याहतेच्छं सर्वनियन्तृत्वम् । तदपि सर्वेषां सत्तास्थितिप्रवृत्तिप्रयोजकसंकल्पाश्रयत्वं इति सर्वकारणत्वसर्वान्तर्यामित्वसर्वशरीरत्वादिसंवलितम् ।

---

पा. [1]दयिताहं सदा देवी ज्ञानानन्दमयी परा ।

अनवद्याऽनवद्याङ्गी नित्यं तद्धर्मधर्मिणी ॥

[2] प्रमथने हरेः.

एवं श्रियोऽपि सर्वेश्वरत्वे भगवतो देव्याश्च पृथक्पृथक् जगत्स्रष्टृत्वमोक्षप्रदत्वादिकमिति शंकापरिहारार्थं "अस्येशाना" इत्यादिश्रुतौ पत्नीत्वनिर्देशः। यथा लोके पत्युः पत्न्याश्च न पृथक् यागानुष्ठानं, अपि तु सहैव, तथा प्रकृतेऽपि न पतिमात्रस्य पत्नीमात्रस्य च जगत्स्रष्टृत्वमोक्षप्रदत्वादिकं; किन्तु परस्परसहितयोरेवेत्युक्तं भवति। अतः सृष्ट्यादिजगद्व्यापारस्य यज्ञत्वं निरूपितं भवति ॥

*इदं तु परमरहस्यं

[1]"अकारेणोच्यते विष्णुः सर्वलोकेश्वरो हरिः।

उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथा ॥

मकारस्तु तयोर्दास इति प्रणवलक्षणम् ॥" इति **कठश्रुतौ** भगवतः अकारवाच्यत्वं, सर्वलोकेश्वरत्वं च प्रतिपाद्य, देव्याः उकारवाच्यत्वं †सादृश्यार्थकतथेति निर्देशात् सर्वलोकेश्वरत्वं प्रतिपादितम्। अनन्तरं "मकारस्तु तयोर्दास" इत्यनेन मकारवाच्यजीवस्य उभयनिरूपितं दासत्वं प्रतिपन्नम्। तच्च शेषत्वप्रतिपत्त्यर्हत्वे सति इष्टविनियोगार्हत्वरूपं शेषत्वं; तत्प्रतिसंबन्धि स्वामित्वं; तदपि ममेदमिति प्रतिपत्त्यर्हत्वे सति शेषित्वं; तच्च विभूतिद्वयजन्यातिशयभाक्त्वरूपं; तच्च शेषित्वमुभयत्र व्यासक्तं एकं; "तयोर्दास" इति द्वन्द्वश्रुतिस्वारस्यात्। तत्र द्वन्द्वसमासादेवोभयोः समप्राधान्यं परस्परसाहित्यं च सिद्धम्। शेषित्वगर्भमीश्वरत्वम्। शेषित्वं स्वामित्वमिति पर्यायः।

---

[1] कठश्रुतौ. **पा.** *इदं –ग. † सादृश्यार्थकतयेति-क.

अथवा "मकारस्तु तयोर्दास" इति जीवानां दासत्वावगमात्, दासत्वप्रतिसंबन्धि स्वामित्वं दंपत्योरवगतम्। [1]"स्वामिन्नैश्वर्ये"[†]इति भगवता पाणिनिनाऽनुशासनात्। तथा च व्यासक्तशेषित्वेश्वरत्वपरेयं श्रुतिरहिर्बुद्न्यसंहितावचनेनोपबृंहिता। यथा

"लक्ष्म्याः समस्ताश्चिदचित्प्रपञ्चो व्याप्यस्तदीशस्य तु साऽपि सर्वं।
तथाऽपि साधारणमीशितृत्वं श्रीश्रीशयोर्द्वौ च सदैकशेषी" इति॥

तस्यायमर्थः चिदचिदात्मकः सर्वप्रपञ्चः लक्ष्म्याः शेषभूतः। सा च देवी [च] भगवच्छेषभूता। यद्यपि भगवदपेक्षयोभयोः शेषत्वमेकरूपं वक्तव्यम्, तथाऽपि देव्याः सर्वेश्वरत्वप्रतिपादकश्रुतिस्मृत्यादिबहुप्रमाणविरोधात् स्वतः शेषत्वाभावे सिद्धे, ऐच्छिकशेषत्वमादाय पर्यवस्यति। प्रपञ्चविषये तु बाधकाभावात्, स्वाभाविकशेषत्वम्। एवं देवीप्रपञ्चयोर्वैषम्यसूचकः 'तथाऽपि' इति शब्दः। 'साधारणमीशितृत्वं'—'साधारणमेकं' इति पर्यायत्वादुभयगतमीश्वरत्वं व्यासक्तमेकं, शेषित्वमिति व्यासक्तमेकं एकवचननिर्देशादिति। उक्तं च श्रीराममिश्रैः [2]"उभयाधिष्ठानं चैकं शेषित्वं" इति। एवं व्यासक्तशेषित्वेश्वरत्वपरेयं श्रुतिरिति भावः। तदभिप्रायेण [3]"एकः शास्ता" इत्येकत्ववादः उपपद्यते। एवं देव्याः सर्वभूतेश्वरत्वे न किंचित्संकटमित्यलमतिविस्तरेण*॥

॥ ९ ॥

---

1 2 षडर्थसंक्षेपे. 3 पा. * ४३ पृष्ठे 'श्रियं-श्री श्रय' इत्यारभ्य एतावत्पर्यन्तं न-ग. 3†इति पाणिनिना—ग.

कामानां दशमे वाचमाकूतीनां च सत्यताम् ।
समृद्धीनां च सत्यत्वं यशसश्च प्रजायते ॥

**मनसः काममाकूतिं वाचस्सत्यमशीमहि ।**
**पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥**

**मनसः कामं**-मनसा काम्यमानमर्थजातम् । **आकूतिं** *अभिप्रायगतिं मनोरथपरिकल्पितमर्थं; †**वाचः** संबन्धी, वाचा याच्यमानम् सर्वप्रकाराभिलषितमर्थं । **पशूनां रूपं**-जीवधनसमृद्धिम् । **अन्नस्य**—अदनीयस्य; **रूपं**—रूप्यते प्रकाश्यतेऽनेनेति रूपं ; अन्नसमृद्धिहेतुभूतं सर्वम् । **सत्यं**—अवितथं यथावस्थितलक्ष्मीप्रसादं; **अशीमहि**-‡अभिलभेमहि । किं च सा **श्रीः**, **मयि**—लक्ष्मीचरणकमलयुगलपरिचरणपरे, पूर्वोक्तमर्थजातं §तत्समृद्धिं प्रथितं **यशश्च श्रयताम्**—प्रापयताम् । अन्तर्भावितण्यर्थोऽयम् । ¶एतेषां भगवदधीनत्वं एषा ऋक् प्रतिपादयति । [1]"आकूतीनामधिपतिं चेतसां च—संकल्पजूतिं देवं विपश्चिम् । मनोराजानमिह वर्धयन्तः । उपहवेऽस्य सुमतौ स्याम ।"

एषा ऋक् भगवतो हृषीकेशत्वं प्रपञ्चयन्ती मनोरथपरिकल्पितानामर्थानामपि भगवानेव प्रापक इति दर्शयति ।

---

1

**पा.** *अभिप्रायगतं—घ. †वाचः सिद्धिं—ख. ‡अभिलषेमहि—ख. §तत्समृद्धिभूतं प्रथितं श्रयतां—प्रापयतामित्यर्थः—ख. ¶या तेषां...प्रतिपादयन्ती—क.

[1]"यथा सर्वगतो विष्णुस्तथैवेयं द्विजोत्तम" इति जगत्समृद्ध्यादिकं भगवानिव श्रीरपि विदधातीति भगवता पराशरेणोपबृंहितमिति ॥ ॥१०॥

अवतीर्णा †जगत्यर्थं कर्दमस्य गृहे रमा ।
या तामेकादशे लक्ष्मीं तन्मुखेनार्थयत्यसौ ॥

**कर्दमेन प्रजाभूता मयि संभव कर्दम ।**
**श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥**

***कर्दमेन** इति । इति ह स्माहुः

[2]"क्षीरोदार्णवसंभूतां श्रियं ‖चोवाह कर्दमः ।
प्रजात्वेन तदा ‡विप्रः तदा प्रभृति कर्दमः ॥

हे **कर्दम** प्रजापते, **कर्दमेन** त्वया, **प्रजाभूता**-प्रजात्वेन स्वीकृता । [3]'अभूततद्भावे च्विः'इत्यादिना ¶च्विः । ईत्त्वाभावः छान्दसः । या पुत्रीत्वेन स्वीकृता तां **श्रियम्** । **मयि**—श्रीसमाराधके **संभव**-§संभावय । किं च हे कर्दम, त्वत्पुत्रीं **श्रियं, मे कुले**--लक्ष्मीचरणारविन्दपरिचरणपरस्य मम पुत्रपौत्रज्ञाति$संबन्ध्यादिष्वपि **वासय**—नित्यनिवासिनीं कुरु । तामेव विशिनष्टि **मातरम्**-सर्वभूतजननीत्वादस्माकमपि जननीम्, **पद्ममालिनीं**-पद्ममालालंकृतां सौन्दर्यलावण्याद्याकारतया

---

[1] वि.पु. १-८-१७. [2] वि.पु. ९-१. [3] पा. †जगत्तत्वं...मुखे.... । ...तन्मुखेनापि याचते–ख. *कर्दमेनेति इति न–क. ‖जग्राह–अ. ‡ लक्ष्मीं...कर्दमी–ख. ¶ च्विप्रत्ययः । ईत्त्वाभावः–ग. § संभावय–समुद्भावयेत्यर्थः–ख. $ संबन्धिवादिष्वपि–क.

सर्वाह्लादकारिणीं श्रियं; "मालाधारिणी" इति तन्मन्त्रे; अस्य मन्त्रस्य कर्दमो देव इति केचिद्वदन्ति। तदपार्थकम्। सर्वस्यास्य सूक्तस्य श्रीदेवताकत्वात्। लक्ष्मीपितृत्वेन कर्दमं प्रति प्रार्थना, न देवतात्वेन। अन्यदैवत्येऽपि मन्त्रे संबन्धान्तरप्रसक्तान्यपि दैवतानि प्रार्थ्यानि महान्ति; तथा च स्मरन्ति [1]"मन्त्रेऽन्यदैवते यानि विद्यन्ते तत्प्रसङ्गतः। सालोक्यात्साहचर्याद्वा तानि नैयत्यकानि तु॥" इति।

॥ ११ ॥

[§]चिक्लीतं श्रीगृहद्वास्थं तत्पत्यायतनान्यपः।
श्रीशेषा द्वादशेनैताः स्वार्थं दृढयतेऽर्थवत्॥

**आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।**
**नि च देवीं मातरं श्रियं वासय मे कुले॥ १२॥**

[¶]**आपः** भगवदायतनभूताः। स्निग्धानां—आज्यतैलमधुप्रभृतीनां कारणभूता याः ता आपः। तानि **स्निग्धानि**—आज्यादीनि, **मम गृहे सृजन्तु**—उत्पादयन्तु। हे **चिक्लीत**—भगवदन्तःपुरद्वाररक्षक; **मे**—लक्ष्मीचरणांभोजभक्तस्य मम **गृहे**, तद्भवनद्वार इव, **वस**—नित्यं सन्निहितो भव। चिक्लीतो नाम भगवदन्तःपुरद्वाररक्षकः। तथा च पौराणिकाः पठन्ति [2]"पद्मो गदो निधिः शंखश्चतुर्दन्ती गजस्तथा। कल्याणसर्पपञ्चास्याश्चिक्लीतो गृहरक्षकाः॥" इति।

---

1 2 §श्रीगृहद्वारिवस्त–तस्या आयतनान्यपि। श्रीशेषाद्वादशेनैतान्-ख. ¶आपः सृजन्तु इत्यादि–ख.

किं च हे *चिक्लीत, **देवीं**—द्योतनशीलां; **मातरं**-अखिललोकजननीं अस्मज्जननीं; **श्रियं**—सर्वसमाश्रयणीयां, **मम कुले**—अस्मत्पुत्रपौत्रादिके **निवासय च**—अस्मत्कुलसमृद्धिं च त्वमेव संवर्धयेत्यर्थः ॥ ॥१२॥

देवासुरमनुष्याद्यैर्यष्टव्यां पद्मवासिनीम् ।
त्रयोदशे पुनर्देवीं लक्ष्मीं प्रार्थयते हरेः ॥

**आर्द्रां पुष्करिणीं यष्टिं पिङ्गलां पद्ममालिनीम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽवह ॥ १३ ॥**

**आर्द्रां**—दयार्द्रहृदयतया तापत्रयतप्तान् प्राणिनो दृष्ट्वा दूयमानचेतस्तया तान् स्वकटाक्षामृतैरभिवर्षन्तीम् । **पुष्करिणीं**—पुष्करवतीं; श्रीनिलयकर्णिकोदरनिवासिनीं [1]"श्रीनिलयधृतकरकमलवरयुत" इत्यादि तन्मन्त्रे । **यष्टिं**—यजिक्रियास्वरूपां, परमयागभूतां; यष्टव्यां वा । **पिङ्गलां**—भगवच्छायानवधारणीयशीतलमनोहराह्लादकरदिव्यवर्णाम् । **पद्ममालिनीं**-दिव्यरूपोद्भूतपद्ममालालंकृतां; "श्रीनिलयमालाधारिणी" इति तन्मन्त्रे । **चन्द्रां हिरण्मयीं** इत्यादेः पूर्ववत् योजना । अत्रापि जातवेदःशब्देन श्रियः पतिमेव संबोधयति ॥ ॥१३॥

आदरातिशयेनैव पूर्वोक्तामविशेषतः ।
चतुर्दशे पुनः प्राह द्वयं तत्सर्वरक्षकम् ॥

---

* चिक्लीते-ख.

**आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम् ।**
**सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽवह ॥ १४ ॥**

अत्र 'पुष्टिं' 'सुवर्णां' 'सूर्यां' 'हेममालिनीं'इति एतन्मात्रो विशेषः। अन्यत्सर्वं पूर्ववत् ॥

**पुष्टिं**—अखिलसमृद्धिरूपाम् । **सुवर्णां**—अनुकूल*प्रतिकूलभीषणरमणीयाप्राकृतदिव्यरूपाम् । **सूर्यां**—सर्वेश्वरवत् सकलचेतनाचेतनव्यापनभरणनियमनशीलां। †सुष्ठु ईरयन्ती इति सूर्या; ताम् । [1]"राजसूयसूर्य" इत्यादिना निपातः । [2]"सूर्य आत्मा जगतस्तस्थुषश्च" इति । पुष्टिमिति प्राप्यत्वमुक्तम् । सुवर्णामिति प्रापकत्वमिति विशेषः ॥ ॥ १४ ॥

अन्तिमेनाद्यसूक्तार्थतात्पर्यातिशयात् पुनः ।
अनन्यगामिनीं देवीं संनियच्छन्नियच्छति ॥

**तां म ‡आवह जातवेदो लक्ष्मीमनपगामिनीम् ।**
**यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्**
**विन्देयं पुरुषानहम् ॥ १५ ॥**

---

[1] अष्टा. ३-१-११४. [2] तै. सं. १-४-४३ *प्रतिकूलाभीषण—क.
†स्रष्टुः—क. ‡ममावह—

अयमत्र विशेषः । **प्रभूतं**—पूर्वोक्तकुप्याकुप्यजीवधनदासीदासा-दिकमशेषधनजातं यस्यां प्रभूतं प्रधानेश्वरेश्वर्यां प्रणिपातप्रसन्नायामखिल-लोकनन्दिन्यां अस्मज्जनन्यां, **प्रभूतं**—निरवधिकातिशयम् । **विन्देयं**—लभेयम् । **तां**-सर्वप्रदानपर्याप्तसमृद्धिमतीं करुणास्नानतमुखीं सर्वेश्वरेश्वरीं श्रियं स्वचरणारविन्दपरिचर्यैकविनोदे[1] मयि; **जातवेदः**—श्रियःपते! **अनपगामिनीं**—अन्यत्र सर्वत्राप्यपगमनशंकारहिता, (तां) यथा तथा स्वज्ञानबलशक्तिक्षमादयासौहार्दादिसर्वकल्याणगुणैस्तव दास्यैकरसे मयि संनिधापय ॥ ॥१५॥

एवमेतत्सूक्तोक्तसकलार्थजातं जानतां अनेनार्चनहोमजपतर्प-णादिकं कुर्वतां तस्याः प्रसन्नपावनकान्ति[2]शान्त्याकरवदनारविन्दनिवे-शितमनोनयनबुद्धीनां तच्चरणारविन्दभजनयजनमननस्मरणकीर्तनवन्दना-दिपरममङ्गलाचरणानां भगवत्पादांभोजविन्यस्तसमस्तभराणामनन्यभावा-नां तच्छरणवरणचारित्रचरणानां पुरुषाणामैहिकमामुष्मिकं वा [3]भोगजातं साक्षात्परमपदाधिष्ठातृभूतपरमपुरुषचरणारविन्द [†]नित्यकैङ्कर्यरसिकपरमसू रि[‡]परिषन्महिष्ठतादिकमपि सकलं सुलभमिति सकलश्रुतिस्मृतीतिहास-पुराणसिद्धान्तः ॥

---

[1] विनोदने-क. [2] शान्त्याकार-क. [3] तच्छरणवरणपवित्रचरित्राणां-घ. चारित्रपराणां ऐहिकामुष्मिकं वा पुरुषार्थं जातं परमपद-ख.

[†] नित्यैकरसिक-ख. [‡] परिषन्मनीषितादिकमपि सुलभमिति सकलश्रुतिस्मृती-तिहासादिसिद्धान्तः-ख.

¶यतीन्द्रमाहानसिकात् प्रणतार्तिहरात् गुरोः ।
सत्संप्रदायसिद्धोऽर्थः श्रीसूक्तस्य विनिश्चितः ॥
*श्रीमहालक्ष्मिदासीये सर्वशास्त्रार्थनिर्णये ।
§श्रीमच्छ्रीसूक्तभाष्येऽस्मिन् रमध्वं भूसुरोत्तमाः ॥

---

$श्रीरङ्गनाथमुनिविरचितं श्रीसूक्तभाष्यं समाप्तम् ॥

॥ हरिः ओं ॥

---

¶अयं श्लोको न–ख *महालक्ष्मीशदासीये–ख, ग.
§श्रीसूक्तभाष्ये वक्ष्येऽस्मिन् क्षमध्वं पुरुषोत्तमाः–ख.
$श्रीगोमठरङ्गनाथ विरचितं–ख.

# INDEXES.

## ऋक्सूची



## भाष्यकारश्लोकसूची

---

## भाष्यनिर्दिष्टनामसूची

## भाष्योपात्तग्रन्थनामसूची

---

## प्रमाणसूची

### अ

न



प

*पूजया तस्य—पा.

* सभार्यो—पा.

---

## प्रमाणसङ्ग्रहः ।

---

---

## ज्ञातव्याकराः ।

---

---

# SRI SUKTA.

[Sri Sukta is a hymn of fifteen verses in praise of the Goddess Sri or Lakshmi and is a 'Khila Rik' (supplemental hymn) of the Rig Veda. The first two are addressed to Jatavedah (Narayana) and request him to bring Sri to the devotee. The third and the fourth are invocations to Sri herself and by the fifth, the devotee does the 'Prapatti.' By the next five, he prays for the removal of all evil and ignorance, and for the gift of learning and wealth and fame. The next two request the father and attendant of Sri to make Her dwell in his house. The last three are, as in the opening verses, addressed to Jatavedah requesting him to bring Lakshmi to him.]

हरिः ओं ॥ हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥१॥

1. O Jatavedah[1]! Bring unto me (the Goddess) Lakshmi of golden hue[2], who is the destroyer of the sins[3] (of her devotees), who is (resplendent) with her garlands of (lotuses of) gold and silver, who is the delight[4] (of the universe) and who has plenty of (wealth in the form of) gold, etc.

R = Ranganatha. S = Sayana. P = Prthvidhara.

1. Lord Narayana who has abundant wealth, all of his own acquisition.—R.
   Agni (God of Fire)—S. & P.
2. who is benevolent and charming.—R.
3. attractive like the doe.
4. refulgent and charming like the moon—S. & P.

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥

2. O Jatavedah! Bring unto me that Lakshmi[1] who will never leave me and by whose grace I may obtain gold and cattle, and horses and servants[2].

1. One who has auspicious signs indicative of wealth which is prayed for by all.—R.
2. sons, friends and servants.—S.

अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥

3. I invoke Goddess[1] Sri[2] who has the All-Pervading (Vishnu) before her, who resides in the heart of souls, (or on the chest of Narayana) and who wakes up (first) at the call (for help) of the elephants (and other beings in distress).

(Or) I invoke Sri who has the cavalry in front (in her march) and the chariots in the middle and who wakes up (daily) by the cry of the elephants attending on her. May she be benign towards me.

1. The resplendent or the sportive Goddess who diverts Herself by the creation, etc. of the world.—R.
2. who is in the form of an army.—S. & P.

कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीं ।
पद्मे स्थितां पद्मवर्णां त्वामिहोपह्वये श्रियं ॥ ४ ॥

4. I invoke Sri[1] who is bliss[2] itself, who is sweet-smiling, who resides in a hall of gold[3], who is compassionate, or drenched[4] (on account of her rising from the Milky Ocean or being bathed by the attending elephants), who is effulgent, who is pleased (because of Her association with Her consort or by the worship of Her devotees), who pleases (all by granting their desires), and who dwells in the lotus and is lotus-coloured.

1. who is the prop of all beings.—R.
2. of indescribable greatness or Brahman itself.—S. In the form of Vani (Goddess of speech).—P.
3. of golden hue or form.—S.
4. born in the constellation of Ardra.—S.

चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मनेमिं शरणमहं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणे ॥५॥

5. I take refuge in Sri who is delightful (to those who take refuge in Her), who has a shining form, who shines with the fame (of protecting those who seek Her), who is worshipped by the Gods (for getting their ends accomplished) or who is loved by Narayana, who is bounteous in Her gifts, and who has the lotus for Her weapon[2] (to remove the distress of, and to shower favours

on, Her devotees.) May the Alakshmi[3] go away from me, I[4] invoke you, O Lakshmi.

1. all pervading.—P.
2. who is in the form of a lotus. 'i' is one of the names of Lakshmi.—S.
3. Nescience or the non-existence of the knowledge of Brahman.—R.
4. 'aham' is found in all the northern versions of the Ṛk and in some of the south. Sayana is of opinion that it is an interpolation.

आदित्यवर्णे तपसोऽधिजातो
वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु
मायान्तरायाश्च बाह्या अलक्ष्मीः ॥ ६ ॥

6. Lakshmi of sun-like lustre[1]! The auspicious Bilva tree was generated by your penance[2]. May the fruits of that tree destroy through (our) penance[3] (viz. chanting their names and worshipping them) (our) ignorance[4] (or nescience), obstacles[5] (to the worship and service of you) and extraneous things (which are not related to you).

1. whose lustre was got from 'a' (Bhagavan).—R.
2. for (you to perform) penance (under it).—P. by your will. R. & S.
3. by (your) favour.—S.
4. ma & ya—two words : ma—towards & ya—which.-P.
5. ignorance pertaining to the organs of sense, both internal and external.—S. inauspicious things—both internal and external.—P.

उपैतु मां देवसखः कीर्तिश्च मनुना सह ।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ॥ ७॥

7. O Goddess[1]! May the reputation[2] (of being learned) come to me along with gems[3]. I am born in this world and may you give me fame and plenty.

1. Devasakhah—(Kubera) the friend of (Maha)deva.–S.&P.
2. The daughter of Daksha—Sati (the consort of Siva).—S.
3. with Manibhadra—an attendant of Kubera—S. with cintamani (the divine gem)—P.

क्षुत्पिपासां मलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् ।
अभूतिमसमृद्धिं च सर्वान् निर्णुद मे गृहात् ॥ ८ ॥

8. I destroy (by your grace) the Alakshmi, who is impure, who is the elder (of Lakshmi), and who is (the cause of) hunger and thirst. Dispel from my house all lack of wealth and of prosperity.

गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ ९ ॥

9. I invoke Sri, to realise whom fragrant things (like sandal-paste, flowers, etc.) are the means[1], who is unassailable[2] by the inauspicious, who is ever-joyful[3] and the possessor of (wealth in the form of) manure (because of the

abundance of cattle She has), and who is the Supreme sovereign of all (living) beings.

1. Who is the means of bringing fame to Her devotees.—R.
(Lakshmi, in the form of the Goddess Earth whose distinguishing feature is smell.—S.
2. unattainable by those who do not seek her with auxiliaries to worship and with devotion.—R.
3. who has an abundance of crops.—S.

मनसः काममाकूतिं वाचस्सत्यमशीमहि ।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥

10. May we realise all (the) wishes of (our) hearts and (our) aims, the truth of (our) words (in the form of requests), the wealth of cattle and food. May Sri bring me fame (also).

कर्दमेन प्रजाभूता मयि संभव कर्दम ।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥

11. (O Kardama!) Bring to me Sri, who has been taken as a daughter[1] by Kardama (i. e., yourself) and make Her dwell in my family—Her, who is the (Universal) Mother[2] and who is decked with garlands of lotuses.

1. who has (Kardama) for Her son.—S. & P.
2. (your) mother—S. & P.

आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥

12. O Ciklita[1]! Let the waters[2] (which are the dwelling places of the Lord) generate (for me) viscous things (like ghee and others). Dwell in my house and make the Goddess Sri, the Mother (of the Universe) also live in my abode.

1. One of the personal attendants of Lakshmi. The name of Manmatha, the son of Sri.
2. deities presiding over the waters.—S.

आर्द्रां पुष्करिणीं यष्टिं पिङ्गलां पद्ममालिनीम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽवह ॥ १३ ॥

13. O Jatavedah! Bring to me Lakshmi who is compassionate, who resides in the lotus pond[1], who is the goal of (all) sacrificial rites[2], who is tawny-coloured, who has garlands of lotuses, who delights[3] (the Universe), and who has an abundance (of wealth in the form) of gold.

1. who has elephants around Her with their trunks lifted ready to pour water on Her for Her bath.—S.
2. who is the punisher (of the delinquent).—S.
3. who is lustrous like the moon.—R.

आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो ममाऽऽवह ॥ १४ ॥

14. O Jatavedah! Bring unto me Lakshmi, who is compassionate, who resides in the lotus-pond, who is prosperity (itself), who is of a

golden hue[1], who is decked with garlands of gold, who is the (efficient) impeller[2] (of the Universe) and who is of golden form.

1. who is of an agreeable hue.—S.
2. who is wealth itself.—P.

तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्
विन्देयं पुरुषानहम् ॥ १५ ॥

15. O Jatavedah ! Bring to me Lakshmi who will never, abandon me and by whose grace I may get in abundance gold and cattle, servants and horses and (other) men.

---

# चतुःश्लोकी ।

---

[Sri Yamunacarya — otherwise known as Sri Alavandar—is the forerunner and spiritual Guru of Ramanuja. He is the author of Mahapurusha Nirnaya, Agamapramanya and Siddhitraya (Atma, Samvit and Isvara Siddhi)—scholarly works of a rather argumentative nature. His Stotra Ratna is a song overflowing with devotion to the Lord. He has written in his own lucid and melodious style another hymn in four verses called Catussloki on Goddess Lakshmi. The four verses say that Lakshmi also has the four qualities which are attributed to Her consort Narayana in the four chapters of the Brahma Sutras. They are: i. He is the cause, efficient and material, of the whole universe; ii. His greatness is unsullied by anything; iii. He is the means by which one has to obtain the highest goal, the supreme bliss and iv. it is Himself. Lakshmi also has these.

The first Sloka speaks about the Vibhutis of Goddess Lakshmi, the second about Her greatness which is incomprehensible even to Her omniscient Consort, the third about Her grace which grants the different wishes of all and the last speaks about Her charming forms which are ever inseparable from, and co-existent with, those of Sri Narayana. The Stotras of the Acaryas who came after, have been based more or less upon this and they elucidate the idea contained herein.]

# श्रीलक्ष्म्यष्टोत्तरशतनामावलिः ।

---

१ ओं प्रकृत्यै नमः ।
विकृत्यै नमः ।
विद्यायै नमः ।
सर्वभूतहितप्रदायै नमः ।
श्रद्धायै नमः ।
विभूत्यै नमः ।
सुरभ्यै नमः ।
परमात्मिकायै नमः ।
२ वाचे नमः ।
पद्मालयायै नमः । १०
पद्मायै नमः ।
शुचये नमः ।
स्वाहायै नमः ।
स्वधायै नमः ।
सुधायै नमः ।
धन्यायै नमः ।
हिरण्मय्यै नमः ।
लक्ष्म्यै नमः ।

३ ओं नित्यपुष्टायै नमः ।
विभावर्यै नमः । २०
अदित्यै नमः ।
दित्यै नमः ।
दीप्तायै नमः ।
वसुधायै नमः ।
वसुधारिण्यै नमः ।
कमलायै नमः ।
कान्तायै नमः । क्षान्तिं
कामाक्ष्यै नमः । क्षामां
क्रोधसंभवायै नमः । क्षीरोद-
४ अनुग्रहपदायै नमः । ३० परायै
बुद्धये नमः ।
अनघायै नमः ।
हरिवल्लभायै नमः ।
अशोकायै नमः ।
अमृतायै नमः ।
दीप्तायै नमः ।

ओं लोकशोकविनाशिन्यै नमः
५ धर्मनिलयायै नमः ।
करुणायै नमः ।
लोक(वेद)मात्रे नमः ४०
पद्मप्रियायै नमः ।
पद्महस्तायै नमः ।
पद्माक्ष्यै नमः ।
पद्मसुन्दर्यै नमः ।
६ पद्मोद्भवायै नमः ।
पद्ममुख्यै नमः ।
पद्मनाभप्रियायै नमः ।
रमायै नमः ।
पद्ममालाधरायै नमः ।
देव्यै नमः । ५०
पद्मिन्यै नमः ।
पद्मगन्धिन्यै नमः ।
७ पुण्यगन्धायै नमः ।
सुप्रसन्नायै नमः ।
प्रसादाभिमुख्यै नमः ।
प्रभायै नमः ।
चन्द्रवदनायै नमः ।

ओं चन्द्रायै नमः ।
चन्द्रसहोदर्यै नमः ।
८ चतुर्भुजायै नमः । ६०
चन्द्ररूपायै नमः ।
इन्दिरायै नमः ।
इन्दुशीतलायै नमः ।
आह्लादजनन्यै नमः ।
पुष्ट्यै नमः ।
शिवायै नमः ।
शिवकर्यै नमः ।
सत्यै नमः ।
९ विमलायै नमः ।
विश्वजनन्यै नमः । ७०
तुष्टयै नमः ।
दारिद्र्यनाशिन्यै नमः ।
प्रीतिपुष्करिण्यै नमः ।
शान्तायै नमः ।
शुक्लमाल्याम्बरायै नमः ।
श्रियै नमः ।
१० भास्कर्यै नमः ।
बिल्वनिलयायै नमः ।

ओं वरारोहायै नमः ।
यशस्विन्यै नमः । ८०
वसुन्धरायै नमः ।
उदाराङ्गायै नमः ।
हरिण्यै नमः ।
हेममालिन्यै नमः ।
११ धनधान्यकर्यै नमः ।
सिद्धये नमः ।
स्त्रैणसौम्यायै नमः ।
शुभप्रदायै नमः ।
नृपवेश्मगतानन्दायै नमः
वरलक्ष्म्यै नमः । ९०
वसुप्रदायै नमः ।
१२ शुभायै नमः ।
हिरण्यप्राकारायै नमः ।
समुद्रतनयायै नमः ।

ओं जयायै नमः ।
मङ्गलदेवतायै नमः ।
विष्णुवक्षःस्थलस्थितायै
नमः ।
१३ विष्णुपत्न्यै नमः ।
प्रसन्नाक्ष्यै नमः ।
नारायणसमाश्रितायै
नमः । १००
दारिद्र्यध्वंसिन्यै नमः ।
देव्यै नमः ।
सर्वोपद्रववारिण्यै नमः ।
१४ नवदुर्गायै नमः ।
महाकाल्यै नमः ।
ब्रह्मविष्णुशिवात्मिकायै
नमः । [नमः ।
त्रिकालज्ञानसंपन्नायै
भुवनेश्वर्यै नमः । १०८

———

# ALPHABETICAL INDEX OF THE 108 NAMES OF LAKSHMI.

———





॥ श्रीः ॥

॥ श्रियै नमः ॥

# श्री

# ॥ लक्ष्मीसहस्रनामस्तोत्रम् ॥

श्रीलक्ष्मीसहस्रनामस्तोत्रं प्रारभ्यते ॥

अस्य श्रीमहालक्ष्मीसहस्रनामस्तोत्रमहामन्त्रस्य श्रीमहाविष्णुर्भगवान् ऋषिः, अनुष्टुप् छन्दः, श्रीमहालक्ष्मीः देवता । श्रीं बीजम्, ह्रीं शक्तिः, हैं कीलकम्, श्रीमहालक्ष्मीप्रसादसिद्ध्यर्थे जपे विनियोगः ॥

## ध्यानम् ॥

पद्मानने पद्मकरे सर्वलोकैकपूजिते ।
सान्निध्यं कुरु मे चित्ते विष्णुवक्षःस्थलस्थिते ॥ १ ॥

भगवद्दक्षिणे पार्श्वे श्रियं देवीमवस्थिताम् ।
ईश्वरीं सर्वभूतानां जननीं सर्वदेहिनाम् ॥ २ ॥

चारुस्मितां चारुदतीं चारुनेत्राननभ्रुवम् ।
सुकपोलां सुकर्णाग्रन्यस्तमौक्तिककुण्डलाम् ॥ ३ ॥

सुकेशां चारुबिंबोष्ठीं रत्नतुंगघनस्तनीम् ।
अलकाग्रैरलिनिभैरलंकृतमुखांबुजाम् ॥ ४ ॥

लसत्कनकसंकाशां पीनसुन्दरकन्धराम् ।
निष्ककण्ठीं स्तनालंबिमुक्ताहारविराजिताम् ॥ ५ ॥

नीलकुन्तलमध्यस्थमाणिक्यमकुटोज्ज्वलाम् ।
शुक्लमाल्यांबरधरां तप्तहाटकवर्णिनीम् ॥ ६ ॥

अनन्यसुलभैस्तैस्तैर्गुणैः सौम्यमुखैर्निजैः ।
अनुरूपानवद्यांगीं हरेर्नित्यानपायिनीम् ॥ ७ ॥

# ॥ श्रीलक्ष्मीसहस्रनामस्तोत्रम् ॥

श्रीवासुदेवमहिषी पुंप्रधानेश्वरेश्वरी ।
अचिन्त्यानन्तविभवा भावाभावविभाविनी ॥ १ ॥

अहंभावात्मिका पद्मा शान्तानन्तचिदात्मिका[1] ।
ब्रह्मभावं गता[2] त्यक्तभेदा सर्वजगन्मयी ॥ २ ॥

षाड्गुण्यपूर्णा त्रय्यन्तरूपाऽऽत्मानपगामिनी ।
[3]एकयोग्याऽशून्यभावाकृतिस्तेजःप्रभाविनी ॥ ३ ॥

[4]भाव्यभावकभावाऽऽत्मभाव्या कामधुगात्मभूः ।
भावाभावमयी दिव्या भेद्यभेदकभावनी[5] ॥ ४ ॥

जगत्कुटुम्बिन्यखिलाधारा कामविजृंभिणी ।
पञ्चकृत्यकरी पञ्चशक्तिमय्यात्मवल्लभा ॥ ५ ॥

भावाभावानुगा सर्वसम्मताऽऽत्मोपगूहिनी ।
अपृथक्चारिणी सौम्या[6] सौम्यरूपव्यवस्थिता ॥ ६ ॥

आद्यन्तरहिता देवी भवभाव्यस्वरूपिणी ।
महाविभूतिः समतां गता ज्योतिर्गणेश्वरी ॥ ७ ॥

---

**पा.** [1] जितात्मिका—श्री. [2] त्यक्तभीता—श्री.
[3] एकयोक्ताशून्यभावा कृतिस्तेजः प्रभाविनी—ति.
[4] भाव्यभावकभावात्मा भाव्या कामयुगात्मभूः—ति.
[5] भावगा-श्री. [6] सौम्यरूपाऽव्यवस्थिता-श्री.

सर्वकार्यकरी धर्मस्वभावात्माऽग्रतः स्थिता ।
आज्ञासमविभक्ताङ्गी ज्ञानानन्दक्रियामयी ॥ ८ ॥

स्वातन्त्र्यरूपा देवोरःस्थिता तद्धर्मधर्मिणी ।
सर्वभूतेश्वरी सर्वभूतमाताऽऽत्ममोहिनी ॥ ९ ॥

सर्वाङ्गसुन्दरी सर्वव्यापिनी प्राप्तयोगिनी ।
विमुक्तिदायिनी [1] भक्तिगम्या संसारतारिणी ॥ १० ॥

[2] धर्मार्थसाधिनी व्योमनिलया व्योमविग्रहा ।
पञ्चव्योमपदी [3] रक्षव्यावृतिः प्राप्यपूरिणी ॥ ११ ॥

आनन्दरूपा सर्वाप्तिशालिनी शक्तिनायिका ।
हिरण्यवर्णा हैरण्यप्राकारा हेममालिनी ॥ १२ ॥

[4] प्रत्नरत्ना भद्रपीठा वेशिनी रजतस्रजा ।
स्वाज्ञाकार्यपरा [5] नित्या सुरभिर्व्योमचारिणी ॥ १३ ॥

योगक्षेमवहा सर्वसुलभेच्छाक्रियात्मिका ।
[6] करुणाग्रानतमुखी कमलाक्षी शशिप्रभा ॥ १४ ॥

---

पा. [1] भक्तगम्या-श्री.
[2] धर्मार्थवादिनी-श्री. [3] रक्षा व्यापृतिः प्राप्तिपूरिणी-ति.
[4] प्रस्फुरत्ता भद्रहोमा-श्री. [5] नित्यसुरभिः.
[6] अयं पाठः पूर्वाचार्यैरादृतः । करुणास्नानतमुखी-ति ।.
महासमूहा निखिलप्ररोहा वेदगोचरा'-श्रीरंगपाठे
इत्थं वर्ततेऽत्र ।

[1] कल्याणदायिनी कल्या कलिकल्मषनाशिनी ।
प्रज्ञापरिमिताऽऽत्मानुरूपा [2] सत्योपयाचिता ॥ १५ ॥

मनोज्ञेया ज्ञानगम्या [3] नित्यमुक्तात्मसेविनी ।
कर्तृशक्तिः सुगहना भोक्तृशक्तिर्गुणप्रिया ॥ १६ ॥

* ज्ञानशक्तिरनौपम्या [4] निर्विकल्पा निरामया ।
[5] अकलङ्काऽमृताधारा महाशक्तिर्विकासिनी ॥ १७ ॥

महामाया महानन्दा [6] निःसङ्कल्पा निराश्रया ।
एकस्वरूपा त्रिविधा संख्यातीता निरञ्जना ॥ १८ ॥

[7] आत्मसत्ता नित्यशुचिः परशक्तिः सुखोचिता ।
नित्यशान्ता निस्तरङ्गा निर्भिन्ना सर्वभेदिनी ॥ १९ ॥

असङ्कीर्णाऽविधेयात्मा [8] निषेव्या सर्वपालिनी ।
निष्कामना सर्वरसाऽभेद्या सर्वार्थसाधिनी ॥ २० ॥

अनिर्देश्याऽपरिमिता निर्विकारा त्रिलक्षणा ।
[9] भयङ्करी सिद्धिरूपाऽव्यक्ता सदसदाकृतिः ॥ २१ ॥

---

**पा.** [1] विस्मयाधायिनी ब्रह्मसंहिता सुगुणोत्तरा-श्री.
[2] सत्योपायार्जिता-श्री. [3] नित्यमुक्ताऽऽत्मसेविनी-श्री.
* प्रथमं शतकम् ।
[4] परशक्तिः-श्री. [5] अकलंका महाशक्तिर्निराधारा-श्री.
[6] ब्रह्मनीतिः-श्री. [7] आत्मसक्ता नित्यशुचिर्निर्विकल्पा-श्री
[8] निषेद्धया सर्वपावनी-श्री. [9] अभयंकरी स्त्रीस्वरूपा-श्री.

अप्रतर्क्याऽप्रतिहता नियन्त्री यन्त्रवाहिनी ।
हार्दमूर्तिर्महामूर्तिरव्यक्ता विश्वगोपिनी ॥ २२ ॥

वर्धमानाऽनवद्याङ्गी निरवद्या त्रिवर्गदा ।
[१] अप्रमेयाऽक्रिया सूक्ष्मा परनिर्वाणदायिनी ॥ २३ ॥

अविगीता तन्त्रसिद्धा योगसिद्धाऽमरेश्वरी [२] ।
विश्वसूतिस्तर्पयन्ती नित्यतृप्ता महौषधिः ॥ २४ ॥

[३] शब्दाह्वया शब्दसहा कृतज्ञा कृतलक्षणा ।
त्रिवर्तिनी त्रिलोकस्था भूर्भुवःस्वरयोनिजा ॥ २५ ॥

अग्राह्याऽ[४] ग्राहिकाऽनन्ताह्वया सर्वातिशायिनी ।
व्योमपद्मा कृतधुरा पूर्णकामा महेश्वरी ॥ २६ ॥

सुवाच्या वाचिका सत्यकथना [५] सर्वपालिनी ।
लक्ष्यमाणा लक्षयन्ती जगज्ज्येष्ठा शुभावहा ॥ २७ ॥

जगत्प्रतिष्ठा भुवनभर्त्री गूढाप्रभावती [६] ।
क्रियायोगात्मिका [७] मूर्तिः हृदब्जस्था महाक्रमा ॥ २८ ॥

परमद्यौः प्रथमजा परमाप्ता जगन्निधिः ।
आत्मानपायिनी तुल्यस्वरूपा समलक्षणा ॥ २९ ॥

---

पा. [१] अप्रमेयाऽमृतदुघा कूटस्था कुलनन्दिनी-श्री.
[२] महेश्वरी-ति.
[३] शब्दात्यया. -श्री [४] अग्राह्यका-श्री.
[५] सर्वपाविनी-श्री. [६] गूढाप्रभाविनी-श्री. [७] मूर्ता-श्री.

* तुल्यवृत्ता समवया मोदमाना खगध्वजा ।
[1] प्रियचेष्टा तुल्यशीला वरदा कामरूपिणी ॥ ३० ॥

समग्रलक्षणाऽनन्ता तुल्यभूतिः [2] सनातनी ।
महर्द्धिः सत्यसङ्कल्पा [3] बह्वृचा परमेश्वरी ॥ ३१ ॥

जगन्माता सूत्रवती भूतधात्री यशस्विनी ।
महाभिलाषा सावित्री प्रधाना सर्वभासिनी ॥ ३२ ॥

नानावपुर्बहुभिदा [4] सर्वज्ञा पुण्यकीर्तना ।
भूताश्रया [5] हृषीकेश्वर्यशोका वाजिवाहिका ॥ ३३ ॥

ब्रह्मात्मिका [6] पुण्यजनिः सत्यकामा समाधिभूः ।
हिरण्यगर्भा गंभीरा [7] गोधूलिः कमलासना ॥ ३४ ॥

जितक्रोधा कुमुदिनी वैजयन्ती मनोजवा ।
धनलक्ष्मीः स्वस्तिकरी राज्यलक्ष्मीर्महासती ॥ ३५ ॥

जयलक्ष्मीर्महागोष्ठी मघोनी माधवप्रिया ।
पद्मगर्भा वेदवती विविक्ता परमेष्ठिनी ॥ ३६ ॥

सुवर्णबिन्दुर्महती महायोगिप्रियाऽनघा ।
पद्मेस्थिता वेदमयी कुमुदा जयवाहिनी ॥ ३७ ॥

---

पा. [1] तुल्यचेष्टा. [2] सनातना [3] भूमिजा
* द्वितीयं शतकम्.
[4] बहुविधा [5] हृषीकेशा अशोका स्वाङ्गिवाहिका [6] पुण्यजनी
[7] गोधूली

संहतिर्निर्मिता ज्योतिर्नियतिर्विविधोत्सवा ।
रुद्रवन्द्या सिन्धुमती वेदमाता मधुव्रता ॥ ३८ ॥

विश्वंभरा हैमवती समुद्रेच्छाविहारिणी ।
अनुकूला यज्ञवती शतकोटिः सुपेशला ॥ ३९ ॥

धर्मोदया [1] धर्मसेव्या सुकुमारी सभावती ।
भीमा ब्रह्मस्तुता मध्यप्रभा देवर्षिवन्दिता ॥ ४० ॥

देवभोग्या महाभागा प्रतिज्ञा पूर्णशेवधिः ।
[2] सुवर्णरुचिरप्रख्या भोगिनी भोगदायिनी ॥ ४१ ॥

[3] वसुप्रदोत्तमवधूः गायत्री कमलोद्भवा * ।
विद्वत्प्रिया पद्मचिह्ना वरिष्ठा कमलेक्षणा ॥ ४२ ॥

पद्मप्रिया सुप्रसन्ना प्रमोदा प्रियपार्श्वगा ।
विश्वभूषा कान्तिमती कृष्णा वीणारवोत्सुका ॥ ४३ ॥

रोचिष्करी स्वप्रकाशा [4] शोभमानविहङ्गमा ।
[5] देवाङ्कस्था परिणतिः कामवत्सा महामतिः ॥ ४४ ॥

इल्वलोत्पलनाभाऽधिशमनी वरवर्णिनी ।
स्वनिष्ठा पद्मनिलया सद्गतिः पद्मगन्धिनी ॥ ४५ ॥

पद्मवर्णा कामयोनिश्चण्डिका चारुकोपना ।
रतिस्नुषा पद्मधरा पूज्या त्रैलोक्यमोहिनी ॥ ४६ ॥

---

पा- [1] धर्मसेवा [2] सुवर्णा [3] वसुप्रणा [4] शोभमाना [5] देवाङ्गस्था
* तृतीयं शतकम्

नित्यकन्या बिन्दुमालिन्यक्षया [1] सर्वमातृका ।
गन्धात्मिका सुरसिका दीप्तमूर्तिः सुमध्यमा ॥ ४७ ॥

पृथुश्रोणी सौम्यमुखी सुभगा विष्टरश्रुतिः ।
स्मितानना [2] चारुदती निम्ननाभिर्महास्तनी ॥ ४८ ॥

स्निग्धवेणी भगवती सुकान्ता वामलोचना ।
पल्लवाङ्घ्रिः [3] पद्ममनाः पद्मबोधा महाप्सराः ॥ ४९ ॥

[4] विद्वत्प्रिया चारुहासा शुभदृष्टिः ककुद्मिनी ।
कम्बुग्रीवा सुजघना [5] रक्तपाणिर्मनोरमा ॥ ५० ॥

पद्मिनी मन्दगमना चतुर्दंष्ट्रा चतुर्भुजा ।
शुभरेखा [6] विलासभ्रूः शुकवाणी कलावती ॥ ५१ ॥

ऋजुनासा कलरवा वरारोहा तलोदरी ।
सन्ध्या बिंबाधरा पूर्वभाषिणी [7] स्त्रीसमाह्वया ॥ ५२ ॥

इक्षुचापा सुमशरा दिव्यभूषा मनोहरा ।
वासवी पाण्डरच्छत्रा करभोरुस्तिलोत्तमा ॥ ५३ ॥

सीमन्तिनी प्राणशक्तिः विभीषिण्यसुधारिणी ।
[8] भद्रा जयावहा चन्द्रवदना कुटिलालका ॥ ५४ ॥

चित्रांबरा चित्रगन्धा * रत्नमौलिसमुज्ज्वला ।
दिव्यायुधा दिव्यमाल्या [9] विशाखा चित्रवाहना ॥५५॥

---

पा. [1] सर्वगान्धिनी [2] चारुगतिः [3] पद्मवना—का. [4] सरस्वती [5] रक्तपाणी [6] करा सुभ्रूः—का. [7] श्रीसमाह्वया [8] मुद्रा-का. [9] विशाला-का. * चतुर्थं शतकम्.

अंबिका सिन्धुतनया [1] सुश्रोणिः [2] सुमहासना ।
सामप्रिया [3] नम्रिताङ्गी सर्वसेव्या वराङ्गना ॥ ५६ ॥

गन्धद्वारा दुराधर्षा नित्यपुष्टा करीषिणी ।
देवजुष्टाऽऽदित्यवर्णा [4] दिव्यगन्धा [5] सुहृत्तमा ॥५७॥

अनन्तरूपाऽनन्तस्था सर्वदानन्तसङ्गमा ।
[6] यज्ञाशिनी महावृष्टिः सर्वपूज्या वषट्क्रिया ॥ ५८ ॥

योगप्रिया वियन्नाभिरनन्तश्रीरतीन्द्रिया ।
योगिसेव्या सत्यरता योगमाया पुरातनी ॥ ५९ ॥

सर्वेश्वरी [7] सुतरणिः शरण्या धर्मदेवता ।
सुतरा [8] संवृतज्योतिर्योगिनी योगसिद्धिदा ॥ ६० ॥

सृष्टिशक्तिः [9] द्योतमाना भूता मङ्गलदेवता ।
संहारशक्तिः प्रबला निरुपाधिः परावरा ॥ ६१ ॥

उत्तारिणी तारयन्ती शाश्वती समितिंजया ।
महाश्रीरजहत्कीर्तिर्योगश्रीः [10] सिद्धिसाधिनी ॥६२ ॥

पुण्यश्रीः पुण्यनिलया ब्रह्मश्रीर्ब्राह्मणप्रिया ।
[11] राजश्री राजकलिता फलश्रीः स्वर्गदायिनी ॥ ६३ ॥

---

पा. [1] निश्रेणी [2] सुमहासिनी [3] नवमृगी [4] दिव्यवर्णा
[5] स्वकर्दमा [6] यज्ञाशनी [7] सुतरुणिः [8] संहृतज्योतिः-का.
[9] द्योतमानभूता. [10] सिद्धिसाधनी. [11] राज्यश्रीः-का.

देवश्रीरद्भुतकथा वेदश्रीः श्रुतिमार्गिणी ।
तमोपहाऽव्ययनिधिर्लक्षणा[1] हृदयंगमा ॥ ६४ ॥
[2] मृतसञ्जीविनी शुभ्रा चन्द्रिका सर्वतोमुखी ।
सर्वोत्तमा मित्रविन्दा मैथिली प्रियदर्शना ॥ ६५ ॥
सत्यभामा वेदवेद्या सीता प्रणतपोषिणी ।
मूलप्रकृतिरीशाना [3] शिवदा दीप्रदीपिनी ॥ ६६ ॥
[4] अभिप्रिया स्वैरवृत्तिः रुक्मिणी सर्वसाक्षिणी ।
गान्धारिणी परगतिस्तत्त्वगर्भा भवाभवा * ॥ ६७ ॥
[5] अन्तर्वृत्तिर्महारुद्रा विष्णुदुर्गा महाबला ।
मदयन्ती लोकधारिण्यदृश्या सर्वनिष्कृतिः ॥ ६८ ॥
देवसेनाऽऽ[6]त्मबलदा वसुधा मुख्यमातृका ।
क्षीरधारा घृतमयी जुह्वती यज्ञदक्षिणा ॥ ६९ ॥
योगनिद्रा योगरता ब्रह्मचर्या दुरत्यया ।
सिंहपिञ्छा महादुर्गा जयन्ती [7] खड्गधारिणी ॥ ७० ॥
[8] सर्वार्तिनाशिनी हृष्टा सर्वेच्छापरिपूरिका ।
आर्या यशोदा वसुदा धर्मकामार्थमोक्षदा ॥ ७१ ॥

---

पा. [1] लक्ष्मणा. [2] मृतसञ्जीवनी-का [3] ईशानी शिवतातिः प्रदीपिनी-का. [4] अभिप्राया-का. [5] अन्तर्वर्तिमहामुद्रा. [6] आत्मफलदा. [7] खगवाहिनी * पञ्चमं शतकम्.
[8] जगत्प्रिया विरूपाक्षी सुवर्णा क्रूरतापिनी ।
कात्यायनी कालरात्रिर्निशिदृष्टा करालिका ॥ ७१ ॥

त्रिशूलिनी [1] पद्मचिह्ना महाकालीन्दुमालिनी [2] ।
एकवीरा भद्रकाली [3] स्वानन्दिन्युल्लसद्गदा ॥ ७२ ॥

नारायणी [4] जगत्पूरण्युर्वरा द्रुहिणप्रसूः ।
यज्ञकामा लेलिहाना तीर्थकर्युग्रविक्रमा ॥ ७३ ॥

गरुत्मदुदयाऽत्युग्रा वाराही [5] मातृभाषिणी ।
अश्वक्रान्ता रथक्रान्ता विष्णुक्रान्तोरुचारिणी ॥ ७४ ॥

[6] वैरोचनी नारसिंही जीमूता शुभदेक्षणा ।
[7] दीक्षाविदा विश्वशक्तिः बीजशक्तिः सुदर्शनी ॥ ७५ ॥

[8] प्रतीता जगती वन्यधारिणी कलिनाशिनी ।
अयोध्याऽच्छिन्नसन्ताना महारत्ना सुखावहा ॥ ७६ ॥

राजवत्यप्रतिभया विनयन्ती [9] महाशना ।
अमृतस्यन्दिनी सीमा यज्ञगर्भा [10] समेक्षणा ॥ ७७ ॥

आकूतिः ऋग्यजुस्सामघोषाऽऽरामवनोत्सुका [11] ।
सोमपा माधवी नित्यकल्याणी कमलार्चिता ॥ ७८ ॥

[12] योगरूढा स्वार्थजुष्टा वह्निवर्णा जितासुरा ।
यज्ञविद्या गुह्यविद्याऽध्यात्मविद्या कृतागमा ॥ ७९ ॥

---

पा. [1] खड्गधरा [2] इन्द्रमालिनी [3] सौनन्दी [4] जगत्पूरिणी.
[5] मातृभीषिणी [6] वैरोचिनी.
[7] दीक्षाविधा विश्वशक्तिर्निजशक्तिः सुदर्शिनी ।
[8] प्रतीतिः [9] अर्कप्रतिभा विनयत्री [10] समीक्षणा
[11] आरामवधूत्सुका. [12] योगरूढिः

[1] आप्यायनी कलातीता सुमित्रा परभक्तिदा ।
कांक्षमाणा महामाया *कोलकामाऽमरावती ॥ ८० ॥

सुवीर्या दुःस्वप्नहरा देवकी वसुदेवता ।
सौदामिनी मेघरथा [2] दैत्यदानवमर्दिनी ॥ ८१ ॥

श्रेयस्करी चित्रलीलैकाकिनी [3] रत्नपादुका ।
मनस्यमाना तुलसी रोगनाशिन्युरुप्रदा [4] ॥ ८२ ॥

तेजस्विनी [5] सुखज्वाला मन्देरखाऽमृताशिनी ।
ब्रह्मिष्ठा [6] वह्निशमना जोषमाणा गुणात्यया ॥ ८३ ॥

कादम्बरी ब्रह्मरता विधात्र्युज्ज्वलहस्तिका ।
अक्षोभ्या सर्वतोभद्रा वयस्या स्वस्तिदक्षिणा ॥ ८४ ॥

सहस्रास्या ज्ञानमाता वैश्वानर्यक्षवर्तिनी ।
प्रत्यग्वरा वारणवत्यनसूया दुरासदा ॥ ८५ ॥

अरुन्धती कुण्डलिनी भव्या दुर्गतिनाशिनी ।
मृत्युञ्जया [7] त्रासहरी निर्भया शत्रुसूदिनी ॥ ८६ ॥

एकाक्षरा [8] सत्पुरन्ध्री सुरपक्षा [9] सुरातुला ।
[10] सकृद्विभाता सर्वार्तिसमुद्रपरिशोषिणी ॥ ८७ ॥

---

पा. मेघरता इति नामावलीपाठः
[1] आप्यायिनी. [2] ऋद्धिदा दैत्यमर्दिनी. [3] एकायिनी
[4] उरुप्रथा [5] सुखोज्ज्वला [6] वह्निशमनी जुषमाणा
[7] त्रासहरा [8] सुपुरन्ध्री [9] वरातुला
[10] सकृद्विभासा प्रद्युम्ना हरिभद्रा धुरन्धरा । * षष्ठं शतकम्.

बिल्वप्रियाऽवनी चक्रहृदया कम्बुतीर्थगा ।
सर्वमन्त्रात्मिका विद्युत् सुवर्णा [१] सर्वरञ्जिनी ॥ ८८ ॥
ध्वजछत्राश्रया [२] भूतिर्वैष्णवी सद्गुणोज्ज्वला ।
सुषेणा लोकविदिता कामसूर्जगदादिभूः ॥ ८९ ॥
वेदान्तयोनिर्जिज्ञासा मनीषा समदर्शिनी ।
सहस्रशक्तिरावृत्तिः सुस्थिरा श्रेयसां निधिः ॥ ९० ॥
रोहिणी रेवती चन्द्रसोदरी [३] भद्रमोहिनी ।
[४] सूर्या कन्याप्रिया विश्वभाविनी सुविभाविनी ॥ ९१ ॥
सुप्रदृश्या कामचारिण्यप्रमत्ता ललन्तिका ।
मोक्षलक्ष्मी [५] र्जगद्योनिर्व्योमलक्ष्मीः सुदुर्लभा ॥ ९२ ॥
भास्करी पुण्यगेहस्था मनोज्ञा विभवप्रदा ।
लोकस्वामि * न्यच्युतार्था पुष्कला जगदाकृतिः ॥ ९३ ॥
विचित्रहारिणी कान्ता [६] वाहिनी भूतवासिनी ।
प्राणिनी प्राणदा [७] विश्वा विश्वब्रह्माण्डवासिनी ॥ ९४ ॥
संपूर्णा परमोत्साहा [८] श्रीमती श्रीपतिः श्रुतिः ।
श्रयन्ती [९] श्रीयमाणा क्ष्मा विश्वरूपा प्रसादिनी ॥ ९५ ॥

---

पा. [१] यशोदा [२] भूमिः [३] भद्रमोदिनी.
[४] आर्या गव्यप्रिया [५] जगज्ज्योतिः [६] पाविनी भूतभाविनी
[७] विद्वत् [८] श्रीपतिः श्रीमतिः [९] श्रयमाणा.
* सप्तमं शतकम्.

[1] हर्षिणी प्रथमा शर्वा विशाला कामवर्षिणी ।
सुप्रतीका [2] पृश्निमती निवृत्तिर्विविधा परा ॥ ९६ ॥

सुयज्ञा मधुरा श्रीदा देवरातिर्महामनाः ।
स्थूला सर्वाकृतिः [3] स्थेमा निम्नगर्भा तमोनुदा ॥ ९७ ॥

तुष्टिर्वागीश्वरी पुष्टिः [4] सर्वादिः [5] सर्वशोषिणी ।
शक्तयात्मिका शब्दशक्तिः विशिष्टा वायुमत्युमा [6] ॥९८॥

[7] आन्वीक्षिकी त्रयी वार्ता दण्डनीतिर्नयात्मिका [8] ।
व्याली [9] संकर्षिणी द्योता महादेव्यपराजिता ॥ ९९ ॥

कपिला पिंगला स्वस्था बलाकी घोषनन्दिनी ।
अजिता [10] कर्षिणी नीतिर्गरुडा गरुडासना ॥ १०० ॥

ह्लादिन्यनुग्रहा नित्या ब्रह्मविद्या हिरण्मयी ।
मही [11] शुद्धविधा पृथ्वी सन्तानिन्यंशुमालिनी ॥१०१॥

यज्ञाश्रया ख्यातिपरा स्तव्या [12] वृष्टिस्त्रिकालगा ।
संबोधिनी शब्दपूर्णा विजयांऽशुमती कला ॥ १०२ ॥

शिवा स्तुतिप्रिया ख्यातिर्जीवयन्ती पुनर्वसुः ।
दीक्षा भक्तार्तिहा रक्षा परीक्षा * यज्ञसंभवा ॥ १०३ ॥

---

पा. [1] हर्षणी प्रथमा सर्वा [2] प्रश्निमतिः
[3] सूक्ष्मा निम्नगव्या [4] सर्वाद्या. [5] स्वरुशोषिणी [6] अमा.
[7] आन्वीक्षकी [8] नियामिका [9] संकर्षणी [10] कर्षणी क्षान्तिः
[11] शुद्धविदा पृथ्वी शतानन्दा [12] घृष्टिः (धृष्टिः इति नामावल्यां)
* अष्टमं शतकम्.

आर्द्रा [1] पुष्करिणी पुण्या गण्या दारिद्र्यभञ्जिनी ।
धन्या मान्या [2] पद्मनेमिर्भार्गवी [3] वंशवर्धनी ॥ १०४ ॥

तीक्ष्णाप्रवृत्तिः सत्कीर्तिः [4] निषेव्याऽघविनाशिनी ।
संज्ञा निःसंशया पूर्वा वनमाला वसुन्धरा ॥ १०५ ॥

[5] पृथुर्महोत्कटाऽहल्या मण्डलाऽऽश्रितमानदा ।
सर्वा नित्योदिनोदारा जृंभमाणा महोदया ॥ १०६ ॥

चन्द्रकान्तोदिता [6] चन्द्रा चतुरश्रा मनोजवा ।
बाला कुमारी [7] युवतिः करुणा भक्तवत्सला ॥१०७॥

मेदिन्युपनिषन्मिश्रा [8] सुमवीरुद्धनेश्वरी ।
दुर्मर्षणी सुचरिता बोधा शोभा सुवर्चला ॥ १०८ ॥

यमुनाऽक्षौहिणी [9] गङ्गा मन्दाकिन्यमरालया [10]।
गोदा गोदावरी चन्द्रभागा कावेर्युदन्वती ॥ १०९ ॥

सिनीवाली कुहू राका [11] वारणा सिन्धुमत्यमा ।
[12]वृद्धिः [13] स्थितिर्ध्रुवा बुद्धिः त्रिगुणा गुणगह्वरा॥११०॥

---

पा. [1] पुष्करणी पुण्यगण्या-का. [2] पद्मनेमी [3] वंशवर्धिनी.
[4] निधिसेव्याऽघनाशिनी [5] पृथ्वी [6] सूर्या [7] युवती
[8] सुमवीरुः.
[9] अक्षोहिणी. [10] अमलाशया. [11] वाराणसीन्दुमत्यसौ-का.
[12] अनन्तरोत्तरश्लोकपूर्वार्धः व्यत्यस्तं वर्तते अस्य स्थाने.
[13] स्तुतिः

पूर्तिर्मायात्मिका स्फूर्तिर्व्याख्या सूत्रा प्रजावती ।
[5] विभूतिर्निष्कलारंभा रक्षा सुविमला क्षमा ॥ १११ ॥

प्राप्तिर्वासन्तिकालेखा भूरिबीजा महागदा ।
अमोघा शान्तिदा [6] स्तुत्या ज्ञानदोत्कर्षिणी [7] शिखा ॥

प्रकृति [8] र्गोमती लीला कमला कामधुग्विधिः ।
प्रज्ञा * रामा परा सन्ध्या सुभद्रा सर्वमंगला ॥ ११३ ॥

नन्दा भद्रा जया रिक्ता [9] तिथिः पूर्णाऽमृतंभरा ।
काष्ठा कामेश्वरी निष्ठा काम्या रम्या [10] वरा स्मृतिः ॥

शंखिनी चक्रिणी श्यामा [11] समा गोत्रा रमा [12] दितिः ।
[13] शान्तिर्दान्तिः स्तुतिः सिद्धिः विरजाऽत्युज्ज्वलाऽव्यया ॥

वाणी गौरीन्दिरा लक्ष्मीर्मेधा श्रद्धा [14] सरस्वती ।
स्वधा स्वाहा रतिरुषा [15] वसुविद्या धृतिः सहा ॥११६॥

[16] शिष्टा इष्टा शुची धात्री [17] सुधा रक्षोघ्नयजाऽमृता ।

---

[5] अन्यत्र अयं ११८ श्लोकत्वेन दृश्यते । तत्र महां-गदा-श्री. 'रम्या' इति नामात्रलिपाठः ।
[6] सत्या [7] शिवा. [8] भामिनी लेला. [9] तिथिपूर्णा ऋतंभरा
[10] राम्या धरा [11] सामा [12] द्युतिः [13] शान्तिदा स्तुतिः सिद्धिश्च. विराजा [14] अप्रमा द्युतिः [15] वसुर्विद्या धृतिः सभा ।
[16] शिष्टारिष्टा शुचिर्धात्री—ति. [17] सुधाराऽक्षोण्यजाऽमृता॥
* नवमं शतकम्.

[1] रत्नावली भारतीडा [2] धीरधीः केवलाऽत्मदा ॥११७॥
या सा शुद्धिः [3] सस्मिता का नीला राधाऽमृतोद्भवा ।
[4] परधुर्यास्पदा ह्रीर्भूः कामिनी शोकनाशिनी ॥११८॥
[5] मायाकृती रसघना नर्मदा गोकुलाश्रया ।
अर्कप्रभा [6] रथेभाश्वनिलयेन्दुप्रभाऽद्भुता ॥ ११९ ॥
श्रीः कृशानुप्रभा वज्रलंभना सर्वभूमिदा ।
भोगप्रिया भोगवती भोगीन्द्रशयनासना ॥ १२० ॥
अश्वपूर्वा रथमध्या [7] हस्तिनादप्रबोधिनी ।
सर्वलक्षणलक्षण्या सर्वलोकप्रियङ्करी ॥ १२१ ॥
[8] सर्वोत्कृष्टा सर्वमयी भवभङ्गापहारिणी ।
वेदान्तस्था ब्रह्मनीतिर्ज्योतिष्मत्यमृतावहा ॥ १२२ ॥
भूताश्रया निराधारा संहिता सुगुणोत्तरा ।
सर्वातिशायिनी प्रीतिः सर्वभूतास्थिता द्विजा ।
सर्वमंगलमांगल्या दृष्टादृष्टफलप्रदा ॥ ॥ १२३ ॥

---

**पा.** [1] अयं उत्तरश्लोकपूर्वार्धत्वेनान्यत्र दृश्यते । अस्य स्थाने च ‘रमण्येका शारदांबा समेधाऽऽद्या शुभाक्षरा’ इति वर्तते॥

[2] धीरा धीः [3] सोस्मिता [4] वरधुर्या स्वधा [5] मायाप्रीतिरसहना

[6] रसेभा श्रीनिलया [7] हस्तिनाथप्रबोधिनी.

[8] उत्तरश्लोकद्वयं श्रीरंगपाठे न दृश्यते ॥

॥ श्रीरस्तु ॥

# श्रीलक्ष्मीसहस्रनामावलिः

ओं श्रियै नमः । *
वासुदेवमहिष्यै नमः ।
पुंप्रधानेश्वरेश्वर्यै नमः ।
अचिन्त्यानन्तविभवायै नमः ।
भावाभावविभाविन्यै नमः ।
2 अहंभावात्मिकायै नमः ।
पद्मायै नमः ।
[1] शान्तानन्तचिदात्मिकायै नमः ।
ब्रह्मभावंगतायै नमः ।
त्यक्तभेदायै नमः । १०
सर्वजगन्मय्यै नमः ।
3 षाड्गुण्यपूर्णायै नमः ।

ओं त्रय्यन्तरूपायै नमः ।
आत्मानपगामिन्यै नमः ।
[2] एकयोग्यायै नमः ।
अशून्यभावाकृत्यै नमः ।
तेजःप्रभाविन्यै नमः ।
4 [3] भाव्यभावकभावायै नमः ।
[4] आत्मभाव्यायै नमः ।
[5] कामदुहे नमः । २०
आत्मभुवे नमः ।
भावाभावमय्यै नमः ।
दिव्यायै नमः ।
[6] भेद्यभेदकभावन्यै नमः ।
5 जगत्कुटुम्बिन्यै नमः ।

---

[1] शान्तानन्तजितात्मिकायै नमः ।
[2] एकयोक्तायै नमः ।
[3] भाव्यभावकभावात्मायै नमः ।
[4] भाव्यायै नमः ।
[5] कामयुजे नमः ।
[6] भेद्यभेदकभावगायै नमः ।

* श्रीर्वासुदेवमहिषी इति स्तोत्रे भवितव्यम् ॥

ओं अखिलाधारायै नमः ।
कामविजृंभिण्यै नमः ।
पञ्चकृत्यकर्यै नमः ।
पञ्चशक्तिमय्यै नमः ।
आत्मवल्लभायै नमः । ३०
6 भावाभावानुगायै नमः ।
सर्वसम्मतायै नमः ।
आत्मोपगूहिन्यै नमः ।
अपृथक्चारिण्यै नमः ।
सौम्यायै नमः ।
[1]सौम्यरूपव्यवस्थितायै नमः ।
7 आद्यन्तरहितायै नमः ।
देव्यै नमः ।
भवभाव्यस्वरूपिण्यै नमः ।
महाविभूत्यै नमः । ४०
समतांगतायै नमः ।
ज्योतिर्गणेश्वर्यै नमः ।
8 सर्वकार्यकर्यै नमः ।
धर्मस्वभावात्मायै नमः ।
ओं अग्रतः स्थितायै नमः ।
आज्ञासमविभक्ताङ्ग्यै नमः ।
ज्ञानानन्दक्रियामय्यै नमः ।
9 स्वातन्त्र्यरूपायै नमः ।
देवोरःस्थितायै नमः ।
तद्धर्मधर्मिण्यै नमः । ५०
सर्वभूतेश्वर्यै नमः ।
सर्वभूतमात्रे नमः ।
आत्ममोहिन्यै नमः ।
10 सर्वाङ्गसुन्दर्यै नमः ।
सर्वव्यापिन्यै नमः ।
प्राप्तयोगिन्यै नमः ।
विमुक्तिदायिन्यै नमः ।
[2]भक्तिगम्यायै नमः ।
संसारतारिण्यै नमः ।
11 [3]धर्मार्थसाधिन्यै नमः । ६०
व्योमनिलयायै नमः ।
व्योमविग्रहायै नमः ।
पञ्चव्योमपद्यै नमः ।

---

[1] सौम्यरूपायै नमः । अव्यवस्थितायै नमः ।

[2] भक्तगम्यायै नमः ।  [3] धर्मार्थवादिन्यै नमः ।

ओं [1] रक्षव्यावृत्त्यै नमः ।
प्राप्यपूरिण्यै नमः ।
12 आनन्दरूपायै नमः ।
सर्वाप्तिशालिन्यै नमः ।
शक्तिनायिकायै नमः ।
हिरण्यवर्णायै नमः ।
हैरण्यप्राकारायै नमः । ७०
हेममालिन्यै नमः ।
13 [2] प्रत्नरत्नायै नमः ।
[3] भद्रपीठायै नमः ।
वेशिन्यै नमः ।
रजतस्रजायै नमः ।
स्वाज्ञाकार्यमरायै नमः ।
[4] नित्यायै नमः ।
सुरभ्यै नमः ।
व्योमचारिण्यै नमः ।
14 योगक्षेमवहायै नमः । ८०

ओं सर्वसुलभायै नमः ।
इच्छाक्रियात्मिकायै नमः ।
[5] करुणाग्रानतमुख्यै नमः ।
कमलाक्ष्यै नमः ।
शशिप्रभायै नमः ।
15 कल्याणदायिन्यै नमः ।
कल्यायै नमः ।
कलिकल्मषनाशिन्यै नमः ।
प्रज्ञापरिमितायै नमः ।
आत्मानुरूपायै नमः । ९०
[6] सत्योपयाचितायै नमः ।
16 मनोज्ञेयायै नमः
ज्ञानगम्यायै नमः ।
[7] नित्यमुक्तात्मसेविन्यै नमः ।
कर्तृशक्त्यै नमः ।
सुगहनायै नमः ।
भोक्तृशक्त्यै नमः ।

---

[1] रक्षायै नमः, व्यापृत्यै नमः । [2] प्रस्फुरत्तायै नमः ।
[3] भद्रहोमायै नमः । [4] नित्यसुरभ्यै नमः ।
[5] महासमूहायै नमः । निखिलप्ररोहायै नमः । वेदगोचरायै नमः ।
विस्मयाधायिन्यै नमः । ब्रह्मसंहितायै नमः । सुगुणोत्तरायै नमः ।
[6] सत्योपायार्जितायै नमः । [7] नित्यमुक्तायै नमः । आत्मसेविन्यैनमः ।

ओं गुणाप्रियायै नमः ।
17 ज्ञानशक्त्यै नमः ।
अनौपम्यायै नमः । १००
[1] निर्विकल्पायै नमः ।
निरामयायै नमः ।
अकलङ्कायै नमः ।
[2] अमृताधारायै नमः ।
महाशक्त्यै नमः ।
विकासिन्यै नमः ।
18 महामायायै नमः ।
महानन्दायै नमः ।
[3] निःसङ्कल्पायै नमः ।
निराश्रयायै नमः । ११०
एकस्वरूपायै नमः ।
त्रिविधायै नमः ।
संख्यातीतायै नमः ।
निरञ्जनायै नमः ।
19 [4] आत्मसत्तायै नमः ।
नित्यशुचये नमः ।

ओं परशक्त्यै नमः ।
सुखोचितायै नमः ।
नित्यशान्तायै नमः ।
निस्तरङ्गायै नमः। १२०
निर्भिन्नायै नमः ।
सर्वभेदिन्यै नमः ।
20 असङ्कीर्णायै नमः ।
अविधेयात्मने नमः ।
[5] निषेव्यायै नमः ।
सर्वपालिन्यै नमः ।
निष्कामनायै नमः ।
सर्वरसायै नमः ।
अभेद्यायै नमः ।
सर्वार्थसाधिन्यै नमः। १३०
21 अनिर्देश्यायै नमः ।
अपरिमितायै नमः ।
निर्विकारायै नमः ।
त्रिलक्षणायै नमः ।
[6] भयङ्कर्यै नमः ।

---

[1] परशक्त्यै नमः । [2] निराधारायै नमः । [3] ब्रह्मनील्यै नमः ।
[4] आत्मसक्तायै नमः । [5] निषेध्यायै नमः । सर्वपावन्यै नमः ।
[6] अभयङ्कर्यै नमः । स्त्रीस्वरूपायै नमः ।

ओं सिद्धिरूपायै नमः ।
अव्यक्तायै नमः ।
सदसदाकृत्यै नमः ।
22 अप्रतर्क्यायै नमः ।
अप्रतिहतायै नमः । १४०
नियन्त्र्यै नमः ।
यन्त्रवाहिन्यै नमः ।
हार्दमूर्त्यै नमः ।
महामूर्त्यै नमः ।
अव्यक्तायै नमः ।
विश्वगोपिन्यै नमः ।
23 वर्धमानायै नमः ।
अनवद्याङ्ग्यै नमः ।
निरवद्यायै नमः ।
त्रिवर्गदायै नमः । १५०
अप्रमेयायै नमः ।
[1] अक्रियायै नमः ।
सूक्ष्मायै नमः ।
परनिर्वाणदायिन्यै नमः ।
24 अविगीतायै नमः ।

ओं तन्त्रसिद्धायै नमः ।
योगसिद्धायै नमः ।
[2] अमरेश्वर्यै नमः ।
विश्वसूत्यै नमः ।
तर्पयन्त्यै नमः । १६०
नित्यतृप्तायै नमः ।
महौषध्यै नमः ।
25 [3] शब्दाह्वयायै नमः ।
शब्दसहायै नमः ।
कृतज्ञायै नमः ।
कृतलक्षणायै नमः ।
त्रिवर्तिन्यै नमः ।
त्रिलोकस्थायै नमः ।
भूर्भुवःस्वरयोनिजायै नमः ।
26 अग्राह्यायै नमः । १७०
[4] अग्राहिकायै नमः ।
अनन्ताह्वयायै नमः ।
सर्वातिशायिन्यै नमः ।
व्योमपद्मायै नमः ।
कृतधुरायै नमः ।

---

[1] अमृतदुघायै — । कूटस्था — । कुलनन्दिन्यै नमः ।
[2] महेश्वर्यै नमः । [3] शब्दाह्वयायै नमः । [4] अग्राह्यकायै नमः ।

ओं पूर्णकामायै नमः ।
महेश्वर्यै नमः ।
27 सुवाच्यायै नमः ।
वाचिकायै नमः ।
सत्यकथनायै नमः । १८०
[1]सर्वपालिन्यै नमः ।
लक्ष्यमाणायै नमः ।
लक्षयन्त्यै नमः ।
जगज्ज्येष्ठायै नमः ।
शुभावहायै नमः ।
28 जगत्प्रातिष्ठायै नमः ।
भुवनभर्त्र्यै नमः ।
[2]गूढाप्रभावत्यै नमः ।
क्रियायोगात्मिकायै नमः ।
[3]मूर्त्यै नमः । १९०
हृदब्जस्थायै नमः ।
महाक्रमायै नमः ।
29 परमदिव्ये नमः ।
प्रथमजायै नमः ।
परमाप्तायै नमः ।

ओं जगन्निधये नमः ।
आत्मानपायिन्यै नमः ।
तुल्यस्वरूपायै नमः ।
समलक्षणायै नमः ।
30 तुल्यवृत्तायै नमः । २००
समवयसे नमः ।
मोदमानायै नमः ।
खगध्वजायै नम ।
[4]प्रियचेष्टायै नमः ।
तुल्यशीलायै नमः ।
वरदायै नमः ।
कामरूपिण्यै नमः ।
31 समग्रलक्षणायै नमः ।
अनन्तायै नमः ।
तुल्यमूर्त्यै नमः । २१०
[5]सनातन्यै नमः ।
महर्द्ध्यै नमः ।
सत्यसङ्कल्पायै नमः ।
[6]बह्वृचायै नमः ।
परमेश्वर्यै नमः ।

---

[1] सर्वपाविन्यै नमः । [2] गूढाप्रभाविन्यै नमः । [3] मूर्तायै नमः ।
[4] तुल्यचेष्टायै नमः । [5] सनातनायै नमः । [6] भूतिजायै नमः ।

32 ओं जगन्मात्रे नमः ।
सूत्रवल्यै नमः ।
भूतधात्र्यै नमः ।
यशस्विन्यै नमः ।
महाभिलाषायै नमः । २२०
सावित्र्यै नमः ।
प्रधानायै नमः ।
सर्वभासिन्यै नमः ।
33 नानावपुषे नमः ।
[1] बहुभिदायै नमः ।
सर्वज्ञायै नमः ।
पुण्यकीर्तनायै नमः ।
भूताश्रयायै नमः ।
[2] हृषीकेश्वर्यै नमः ।
अशोकायै नमः । २३०
[3] वाजिवाहिकायै नमः ।
34 ब्रह्मात्मिकायै नमः ।
पुण्यजन्यै नमः ।
सत्यकामायै नमः ।
समाधिभुवे नमः ।

ओं हिरण्यगर्भायै नमः ।
गंभीरायै नमः ।
गोधूल्यै नमः ।
कमलासनायै नमः ।
35 जितक्रोधायै नमः । २४०
कुमुदिन्यै नमः ।
वैजयन्त्यै नमः ।
मनोजवायै नमः ।
धनलक्ष्म्यै नमः ।
स्वस्तिकर्यै नमः ।
राज्यलक्ष्म्यै नमः ।
महासत्यै नमः ।
36 जयलक्ष्म्यै नमः ।
महागोष्ठ्यै नमः ।
मघोन्यै नमः । २५०
माधवप्रियायै नमः ।
पद्मगर्भायै नमः ।
वेदवत्यै नमः ।
विविक्तायै नमः ।
परमेष्ठिन्यै नमः ।

---

[1] बहुविधायै नमः । [2] हृषीकेशायै नमः ।
[3] खाङ्गिवाहिकायै नमः ।

37 ओं सुवर्णबिन्दवे नमः ।
महत्यै नमः ।
महायोगिप्रियायै नमः ।
अनघायै नमः ।
पद्मस्थितायै नमः । २६०
वेदमय्यै नमः ।
कुमुदायै नमः ।
जयवाहिन्यै नमः ।
38 संहत्यै नमः ।
निर्मितायै नमः ।
ज्योतिषे नमः ।
नियत्यै नमः ।
विविधोत्सवायै नमः ।
रुद्रवन्द्यायै नमः ।
सिन्धुमत्यै नमः । २७०
वेदमात्रे नमः ।
मधुव्रतायै नमः ।
39 विश्वंभरायै नमः ।
हैमवत्यै नमः ।
समुद्रायै नमः ।

ओं इच्छाविहारिण्यै नमः ।
अनुकूलायै नमः ।
यज्ञवत्यै नमः ।
शतकोट्यै नमः ।
सुपेशलायै नमः । २८०
40 धर्मोदयायै नमः ।
[1] धर्मसेव्यायै नमः ।
सुकुमार्यै नमः ।
सभावत्यै नमः ।
भीमायै नमः ।
ब्रह्मस्तुतायै नमः ।
मध्यप्रभायै नमः ।
देवर्षिवन्दितायै नमः ।
41 देवभोग्यायै नमः ।
महाभागायै नमः । २९०
प्रतिज्ञायै नमः ।
पूर्णशेवध्यै नमः ।
[2] सुवर्णरुचिरप्रख्यायै नमः ।
भोगिन्यै नमः ।
भोगदायिन्यै नमः ।

---

[1] धर्मसेवायै नमः । [2] सुवर्णायै नमः ।
रुचिरप्रख्यायै नमः ।

42 ओं [1]वसुप्रदायै नमः ।
उत्तमवध्वै नमः ।
गायत्र्यै नमः ।
कमलोद्भवायै नमः ।
विद्वत्प्रियायै नमः ॥३००॥
पद्मचिह्नायै नमः ।
वरिष्ठायै नमः ।
कमलेक्षणायै नमः ।
43 पद्मप्रियायै नमः ।
सुप्रसन्नायै नमः ।
प्रमोदायै नमः ।
प्रियपार्श्वगायै नमः ।
विश्वभूषायै नमः ।
कान्तिमत्यै नमः ।
कृष्णायै नमः । ३१०
वीणारवोत्सुकायै नमः ।
44 रोचिष्कर्यै नमः ।
स्वप्रकाशायै नमः ।
[2]शोभमानविहङ्गमायै नमः ।
[3]देवाङ्कस्थायै नमः ।
ओं परिणत्यै नमः ।
कामवत्सायै नमः ।
महामत्यै नमः ।
45 इल्वलायै नमः ।
उत्पलनाभायै नमः । ३२०
अधिशमन्यै नमः ।
वरवर्णिन्यै नमः ।
स्वनिष्ठायै नमः ।
पद्मनिलयायै नमः ।
सद्गत्यै नमः ।
पद्मगन्धिन्यै नमः ।
46 पद्मवर्णायै नमः ।
कामयोन्यै नमः ।
चण्डिकायै नमः ।
चारुकोपनायै नमः । ३३०
रतिस्नुषायै नमः ।
पद्मधरायै नमः ।
पूज्यायै नमः ।
त्रैलोक्यमोहिन्यै नमः ।
47 नित्यकन्यायै नमः ।

---

[1] वसुप्रणायै नमः । [2] शोभमानायै नमः । विहङ्गमायै नमः । [3] देवाङ्गस्थायै नमः ।

ओं बिन्दुमालिन्यै नमः ।
अक्षयायै नमः ।
[1] सर्वमातृकायै नमः ।
गन्धात्मिकायै नमः ।
सुरसिकायै नमः । ३४०
दीप्तमूर्त्यै नमः ।
सुमध्यमायै नमः ।
48 पृथुश्रोण्यै नमः ।
सौम्यमुख्यै नमः ।
सुभगायै नमः ।
विष्टरश्रुत्यै नमः ।
स्मिताननायै नमः ।
[2] चारुदत्यै नमः ।
निम्ननाभ्यै नमः ।
महास्तन्यै नमः । ३५०
49 स्निग्धवेण्यै नमः ।
भगवत्यै नमः ।
सुकान्तायै नमः ।
वामलोचनायै नमः ।
पल्लवाङ्घ्र्यै नमः ।

ओं [3] पद्ममनसे नमः ।
पद्मबोधायै नमः ।
महाप्सरसे नमः ।
50 [4] विद्वत्प्रियायै नमः ।
चारुहासायै नमः । ३६०
शुभदृष्ट्यै नमः ।
ककुद्मिन्यै नमः ।
कम्बुग्रीवायै नमः ।
सुजघनायै नमः ।
रक्तपाण्यै नमः ।
मनोरमायै नमः ।
51 पद्मिन्यै नमः ।
मन्दगमनायै नमः ।
चतुर्दंष्ट्रायै नमः ।
चतुर्भुजायै नमः । ३७०
शुभरेखायै नमः ।
विलासभ्रुवे नमः ।
शुकवाण्यै नमः ।
कलावत्यै नमः ।
52 ऋजुनासायै नमः ।

---

[1] सर्वगन्धिन्यै नमः । [2] चारुगत्यै नमः ।
[3] पद्मवनायै नमः । [4] सरस्वत्यै नमः ।

ओं कलरवायै नमः ।
वरारोहायै नमः ।
तलोदर्यै नमः ।
सन्ध्यायै नमः ।
बिम्बाधरायै नमः । ३८०
पूर्वभाषिण्यै नमः ।
[१] स्त्रीसमाह्वयायै नमः ।
53 इक्षुचापायै नमः ।
सुमशरायै नमः ।
दिव्यभूषायै नमः ।
मनोहरायै नमः ।
वासव्यै नमः ।
पाण्डरच्छत्रायै नमः ।
करभोरवे नमः ।
तिलोत्तमायै नमः । ३९०
54 सीमन्तिन्यै नमः ।
प्राणशक्त्यै नमः ।
विभीषिण्यै नमः ।
असुधारिण्यै नमः ।

ओं [२] भद्रायै नमः ।
जयावहायै नमः ।
चन्द्रवदनायै नमः ।
कुटिलालकायै नमः ।
55 चित्राम्बरायै नमः ।
चित्रगन्धायै नमः । ४००
रत्नमौलिसमुज्ज्वलायै नमः ।
दिव्यायुधायै नमः ।
दिव्यमाल्यायै नमः ।
[३] विशाखायै नमः ।
चित्रवाहनायै नमः ।
56 अम्बिकायै नमः ।
सिन्धुतनयायै नमः ।
[४] सुश्रोण्यै नमः ।
[५] सुमहासनायै नमः ।
सामप्रियायै नमः । ४१०
[६] नम्रिताङ्ग्यै नमः ।
सर्वसेव्यायै नमः ।
वराङ्गनायै नमः ।

---

[१] श्रीसमाह्वयायै नमः । [२] मुद्रायै नमः ।
[३] विशालायै नमः । [४] निश्रेण्यै नमः । [५] सुमहासिन्यै नमः ।
[६] नवमृग्यै नमः ।

57 ओं गन्धद्वारायै नमः ।
दुराधर्षायै नमः ।
नित्यपुष्टायै नमः ।
करीषिण्यै नमः ।
देवजुष्टायै नमः ।
[1] आदित्यवर्णायै नमः ।
दिव्यगन्धायै नमः । ४२०
सुहृत्तमायै नमः ।
58 अनन्तरूपायै नमः ।
अनन्तस्थायै नमः ।
सर्वदानन्तसङ्गमायै नमः ।
[2] यज्ञाशिन्यै नमः ।
महावृष्ट्यै नमः ।
सर्वपूज्यायै नमः ।
वषट्क्रियायै नमः ।
59 योगप्रियायै नमः
वियन्नाभ्यै नमः । ४३०
अनन्तश्रियै नमः ।
अतीन्द्रियायै नमः ।
ओं योगिसेव्यायै नमः ।
सत्यरतायै नमः ।
योगमायायै नमः ।
पुरातन्यै नमः ।
60 सर्वेश्वर्यै नमः ।
[3] सुतरण्यै नमः ।
शरण्यायै नमः ।
धर्मदेवतायै नमः । ४४०
सुतरायै नमः ।
[4] संवृतज्योतिषे नमः ।
योगिन्यै नमः ।
योगसिद्धिदायै नमः ।
61 सृष्टिशक्त्यै नमः ।
[5] द्योतमानायै नमः ।
भूतायै नमः ।
मङ्गलदेवतायै नमः ।
संहारशक्त्यै नमः ।
प्रबलायै नमः । ४५०
निरुपाधये नमः ।

---

[1] दिव्यवर्णायै नमः । [2] यज्ञाशन्यै नमः ।
[3] सुतरुण्यै नमः । [4] संहृतज्योतिषे नमः ।
[5] द्योतमानभूतायै नमः ।

ओं परावरायै नमः ।
62 उत्तारिण्यै नमः ।
तारयन्त्यै नमः ।
शाश्वत्यै नमः ।
समितिञ्जयायै नमः ।
महाश्रियै नमः ।
योगश्रियै नमः ।
[1] सिद्धिसाधन्यै नमः । ४६०
63 पुण्यश्रियै नमः ।
पुण्यनिलयायै नमः ।
ब्रह्मश्रियै नमः ।
ब्राह्मणप्रियायै नमः ।
[2] राजश्रियै नमः ।
राजकलितायै नमः ।
फलश्रियै नमः ।
स्वर्गदायिन्यै नमः ।
64 देवश्रियै नमः ।
अद्भुतकथायै नमः । ४७०
वेदश्रियै नमः ।
श्रुतिमार्गिण्यै नमः ।

ओं तमोपहायै नमः ।
अव्ययनिधये नमः ।
[3] लक्षणायै नमः ।
हृदयङ्गमायै नमः ।
65 [4] मृतसञ्जीविन्यै नमः ।
शुभ्रायै नमः ।
चन्द्रिकायै नमः ।
सर्वतोमुख्यै नमः । ४८०
सर्वोत्तमायै नमः ।
मित्रविन्दायै नमः ।
मैथिल्यै नमः ।
प्रियदर्शनायै नमः ।
66 सत्यभामायै नमः ।
वेदवेद्यायै नमः ।
सीतायै नमः ।
प्रणतपोषिण्यै नमः ।
मूलप्रकृत्यै नमः ।
[5] ईशानायै नमः । ४९०
शिवदायै नमः ।
दीप्रदीपिन्यै नमः ।

---

[1] सिद्धिसाधिन्यै नमः । [2] राज्यश्रियै नमः ।
[3] लक्ष्मणायै नमः । [4] मृतसञ्जीवन्यै नमः । [5] ईशान्यै नमः ।

ओं 67 * अभिप्रियायै नमः ।
स्वैरवृत्त्यै नमः ।
रुक्मिण्यै नमः ।
सर्वसाक्षिण्यै नमः ।
गान्धारिण्यै नमः ।
परगत्यै नमः ।
तत्त्वगर्भायै नमः ।
भवाभवायै नमः ॥५००॥
68 [१] अन्तर्वृत्त्यै नमः ।
[२] महारुद्रायै नमः ।
विष्णुदुर्गायै नमः ।
महाबलायै नमः ।
मदयन्त्यै नमः ।
लोकधारिण्यै नमः ।
अदृश्यायै नमः ।
सर्वानिष्कृत्यै नमः ।
69 देवसेनायै नमः ।
ओं [३] आत्मबलदायै नमः ।५१०
वसुधायै नमः ।
मुख्यमातृकायै नमः ।
क्षीरधारायै नमः ।
घृतमय्यै नमः ।
जुहुत्यै नमः ।
यज्ञदक्षिणायै नमः ।
70 योगनिद्रायै नमः ।
योगरतायै नमः ।
ब्रह्मचर्यायै नमः ।
दुरत्ययायै नमः । ५२०
सिंहपिञ्छायै नमः ।
महादुर्गायै नमः ।
जयन्त्यै नमः ।
[४] खड्गधारिण्यै नमः ।
71. [५] सर्वार्तिनाशिन्यै नमः ।
हृष्टायै नमः ।

---

* अभिप्रायायै नमः । [१] अन्तर्वर्त्यै नमः । [२] महामुद्रायै नमः ।
[३] आत्मफलदायै नमः । [४] खगवाहिन्यै नमः ।
[५] जगत्प्रियायै नमः । विरूपाक्षायै नमः । सुवर्णायै नमः ।
क्रूरतापिन्यै नमः । कात्यायन्यै नमः । कालरात्र्यै नमः ।
निशिदृष्टायै नमः । करालिकायै नमः ।

ओं सर्वेच्छापरिपूरिकायै नमः ।
आर्यायै नमः ।
यशोदायै नमः ।
वसुदायै नमः । ५३०
धर्मकामार्थमोक्षदायै नमः ।
72 त्रिशूलिन्यै नमः ।
[१] पद्मचिह्नायै नमः ।
महाकाल्यै नमः ।
[२] इन्दुमालिन्यै नमः ।
एकवीरायै नमः ।
भद्रकाल्यै नमः ।
[३] स्वानन्दिन्यै नमः ।
उल्लसद्गदायै नमः ।
73 नारायण्यै नमः । ५४०
[४] जगत्पूरण्यै नमः ।
द्रुहिणप्रसवे नमः ।
यज्ञकामायै नमः ।
लेलिहानायै नमः ।
तीर्थकर्यै नमः ।

ओं उग्रविक्रमायै नमः ।
74 गरुत्मदुदयायै नमः ।
अत्युग्रायै नमः ।
वाराह्यै नमः । ५५०
[५] मातृभाषिण्यै नमः ।
अश्वक्रान्तायै नमः ।
रथक्रान्तायै नमः ।
विष्णुक्रान्तायै नमः ।
उरुचारिण्यै नमः ।
75 [६] वैरोचन्यै नमः ।
नारसिंह्यै नमः ।
जीमूतायै नमः ।
शुभदेक्षणायै नमः ।
[७] दीक्षाविदायै नमः । ५६०
विश्वशक्त्यै नमः ।
निजशक्त्यै नमः ।
सुदर्शिन्यै नमः ।
76 [८] प्रतीतायै नमः ।
जगत्यै नमः ।

---

[१] खड्गधरायै नमः । [२] इन्द्रमालिन्यै नमः । [३] सौनन्द्यै नमः ।
[४] जगत्पूरिण्यै नमः । [५] मातृभीषिण्यै नमः । [६] वैरोचिन्यै नमः ।
[७] दीक्षाविधायै नमः । [८] प्रतीत्यै नमः ।

ओं वन्यधारिण्यै नमः ।
कलिनाशिन्यै नमः ।
अयोध्यायै नमः ।
अच्छिन्नसन्तानायै नमः ।
महारत्नायै नमः । ५७०
सुखावहायै नमः ।
77 राजवत्यै नमः ।
[१] अप्रतिभयायै नमः ।
[२] विनयन्त्यै नमः ।
महाशनायै नमः ।
अमृतस्यन्दिन्यै नमः ।
सीमायै नमः ।
यज्ञगर्भायै नमः ।
[३] समेक्षणायै नमः ।
78 आकूत्यै नमः । ५८०
ऋग्यजुःसामघोषायै नमः ।
[४] आरामवनोत्सुकायै नमः ।
सोमपायै नमः ।
माधव्यै नमः ।

ओं नित्यकल्याण्यै नमः ।
कमलार्चितायै नमः ।
79 [५] योगरूढायै नमः ।
स्वार्थजुष्टायै नमः ।
वह्निवर्णायै नमः ।
जितासुरायै नमः । ५९०
यज्ञविद्यायै नमः ।
गुह्यविद्यायै नमः ।
अध्यात्मविद्यायै नमः ।
कृतागमायै नमः ।
80 [६] आप्यायन्त्यै नमः ।
कलातीतायै नमः ।
सुमित्रायै नमः ।
परभक्तिदायै नमः ।
कांक्षमाणायै नमः ।
महामायायै नमः ॥६००॥
कोलकामायै नमः ।
अमरावत्यै नमः ।
81 सुवीर्यायै नमः ।

---

[१] अर्कप्रतिभायै नमः । [२] विनयत्र्यै नमः । [३] समक्षिणायै नमः ।
[४] आरामवधूत्सुकायै नमः । [५] योगरूढयै नमः ।
[६] आप्यायिन्यै नमः ।

ओं दुःस्वप्नहरायै नमः ।
देवक्यै नमः ।
वसुदेवतायै नमः ।
सौदामिन्यै नमः ।
[१] मेघरथायै नमः ।
[२] दैत्यदानवमर्दिन्यै नमः ।
82 श्रेयस्कर्यै नमः । ६१०
चित्रलीलायै नमः ।
[३] एकाकिन्यै नमः ।
रत्नपादुकायै नमः ।
मनस्यमानायै नमः ।
तुलस्यै नमः ।
रोगनाशिन्यै नमः ।
[४] उरुप्रदायै नमः ।
83 तेजस्विन्यै नमः ।
[५] सुखज्वालायै नमः ।
मन्दरेखायै नमः । ६२०
अमृताशिन्यै नमः ।

ओं ब्रह्मिष्ठायै नमः ।
[६] वह्निशमनायै नमः ।
[७] जोषमाणायै नमः ।
गुणात्ययायै नमः ।
84 कादम्बर्यै नमः ।
ब्रह्मरतायै नमः ।
विधात्र्यै नमः ।
उज्ज्वलहस्तिकायै नमः ।
अक्षोभ्यायै नमः । ६३०
सर्वतोभद्रायै नमः ।
वयस्यायै नमः ।
स्वस्तिदक्षिणायै नमः ।
85 सहस्रास्यायै नमः ।
ज्ञानमात्रे नमः ।
वैश्वानर्यै नमः ।
अक्षवर्तिन्यै नमः ।
प्रत्यग्वरायै नमः ।
वारणवत्यै नमः ।

---

[१] मेघरतायै नमः । [२] ऋद्धिदायै नमः । दैत्यमर्दिन्यै नमः ।
[३] एकायिन्यै नमः । [४] उरुप्रथायै नमः ।
[५] सुखोज्ज्वलायै नमः । [६] वह्निशमन्यै नमः ।
[७] जुषमाणायै नमः ।

ओं अनसूयायै नमः । ६४०
दुरासदायै नमः ।
86 अरुन्धत्यै नमः ।
कुण्डलिन्यै नमः ।
भव्यायै नमः ।
दुर्गतिनाशिन्यै नमः ।
मृत्युञ्जयायै नमः ।
[1] त्रासहर्यै नमः ।
निर्भयायै नमः ।
शत्रुसूदिन्यै नमः ।
87 एकाक्षरायै नमः । ६५०
[2] सत्पुरन्ध्र्यै नमः ।
सुरपक्षायै नमः ।
[3] सुरातुलायै नमः ।
[4] सकृद्विभातायै नमः ।
[5] सर्वार्तिसमुद्रपरिशोषिण्यै नमः ।
88 बिल्वप्रियायै नमः ।
अवन्यै नमः ।
चक्रहृदयायै नमः ।

ओं कम्बुतीर्थगायै नमः ।
सर्वमन्त्रात्मिकायै नमः । ६६०
विद्युते नमः ।
[6] सुवर्णायै नमः ।
सर्वरञ्जिन्यै नमः ।
89 ध्वजच्छत्राश्रयायै नमः ।
[7] भूत्यै नमः ।
वैष्णव्यै नमः ।
सद्गुणोज्ज्वलायै नमः ।
सुषेणायै नमः ।
लोकविदितायै नमः ।
कामसुवे नमः । ६७०
जगदादिभुवे नमः ।
90 वेदान्तयोन्यै नमः ।
जिज्ञासायै नमः ।
मनीषायै नमः ।
समदर्शिन्यै नमः ।
सहस्रशक्त्यै नमः ।
आवृत्त्यै नमः ।

---

[1] त्रासहरायै नमः । [2] सुपुरन्ध्र्यै नमः । [3] वरातुलायै नमः ।
[4] सकृद्विभासायै नमः । [5] प्रद्युम्नायै नमः । हरिभद्रायै नमः ।
धुरन्धरायै नमः । [6] यशोदायै नमः । [7] भूम्यै नमः ।

ओं सुस्थिरायै नमः ।
श्रेयसां निधये नमः ।
91 रोहिण्यै नमः । ६८०
रेवत्यै नमः ।
चन्द्रसोदर्यै नमः ।
[1] भद्रमोहिन्यै नमः ।
[2] सूर्यायै नमः ।
[3] कन्याप्रियायै नमः ।
विश्वभाविन्यै नमः ।
सुविभाविन्यै नमः ।
92 सुप्रदृश्यायै नमः ।
कामचारिण्यै नमः ।
अप्रमत्तायै नमः । ६९०
ललन्तिकायै नमः ।
मोक्षलक्ष्म्यै नमः ।
[4] जगद्योन्यै नमः ।
व्योमलक्ष्म्यै नमः ।
सुदुर्लभायै नमः ।
93 भास्कर्यै नमः ।

ओं पुण्यगेहस्थायै नमः ।
मनोज्ञायै नमः ।
विभवप्रदायै नमः ।
लोकस्वामिन्यै नमः ।।७००
अच्युतार्थायै नमः ।
पुष्कलायै नमः ।
जगदाकृत्यै नमः ।
94 विचित्रहारिण्यै नमः ।
कान्तायै नमः ।
[5] वाहिन्यै नमः ।
[6] भूतवासिन्यै नमः ।
प्राणिन्यै नमः ।
प्राणदायै नमः ।
[7] विश्वायै नमः । ७१०
विश्वब्रह्माण्डवासिन्यै नमः ।
95 संपूर्णायै नमः ।
परमोत्साहायै नमः ।
श्रीमत्यै नमः ।
श्रीपत्यै नमः ।

---

[1] भद्रमोदिन्यै नमः । [2] आर्यायै नमः । [3] गव्यप्रियायै नमः ।
[4] जगज्ज्योतिषे नमः । [5] पाविन्यै नमः ।
[6] भूतपाविन्यै नमः । (भूतभाविनी इति मूले) [7] विद्रुते नमः ।

ओं श्रुत्यै नमः ।
श्रयन्त्यै नमः ।
[1] श्रीयमाणायै नमः ।
क्ष्मायै नमः ।
विश्वरूपायै नमः । ७२०
प्रसादिन्यै नमः ।
96 [2] हर्षिण्यै नमः ।
प्रथमायै नमः ।
[3] शर्वायै नमः ।
विशालायै नमः ।
कामवर्षिण्यै नमः ।
सुप्रतीकायै नमः ।
[4] पृश्निमत्यै नमः ।
निवृत्त्यै नमः ।
विविधायै नमः । ७३०
परायै नमः ।
97 सुयज्ञायै नमः ।
मधुरायै नमः ।

ओं श्रीदायै नमः ।
देवरात्यै नमः ।
महामनसे नमः ।
स्थूलायै नमः ।
सर्वाकृत्यै नमः ।
[5] स्थेमायै नमः ।
[6] निम्नगर्भायै नमः । ७४०
तमोनुदायै नमः ।
98 तुष्टयै नमः ।
वागीश्वर्यै नमः ।
पुष्टयै नमः ।
[7] सर्वाद्यै नमः ।
[8] सर्वशोषिण्यै नमः ।
शक्त्यात्मिकायै नमः ।
शब्दशक्त्यै नमः ।
विशिष्टायै नमः ।
वायुमत्यै नमः । ७५०
उमायै नमः ।

---

[1] श्रयमाणायै नमः । [2] हर्षण्यै नमः । [3] सर्वायै नमः ।
[4] प्रश्निमत्यै नमः । [5] सूक्ष्मायै नमः । [6] निम्नगव्यायै नमः ।
[7] सर्वायै नमः । आद्यायै नमः । [8] स्वरुशोषिण्यै नमः ।

ओं आन्वीक्षिक्यै नमः ।
[१] त्रय्यै नमः ।
वार्तायै नमः ।
दण्डनीत्यै नमः ।
99 [२] नयात्मिकायै नमः ।
व्याल्यै नमः ।
[३] सङ्कर्षिण्यै नमः ।
द्योतायै नमः ।
महादेव्यै नमः । ७६०
अपराजितायै नमः ।
100 कपिलायै नमः ।
पिङ्गलायै नमः ।
स्वस्थायै नमः ।
बलाक्यै नमः ।
घोषनन्दिन्यै नमः ।
अजितायै नमः ।
[४] कर्षिण्यै नमः ।
[५] नीत्यै नमः ।
गरुडायै नमः । ७७०

ओं गरुडासनायै नमः ।
101 ह्लादिन्यै नमः ।
अनुग्रहायै नमः ।
नित्यायै नमः ।
ब्रह्मविद्यायै नमः ।
हिरण्मय्यै नमः ।
मह्यै नमः ।
[६] शुद्धविधायै नमः ।
पृथ्व्यै नमः ।
[७] सन्तानिन्यै नमः । ७८०
अंशुमालिन्यै नमः ।
102 यज्ञाश्रयायै नमः ।
ख्यातिपरायै नमः ।
स्तव्यायै नमः ।
[८] वृष्ट्यै नमः ।
त्रिकालगायै नमः ।
संबोधिन्यै नमः ।
शब्दपूर्णायै नमः ।
विजयायै नमः ।

---

[१] त्रयीवार्तायै नमः । [२] नियामिकायै नमः ।
[३] सङ्कर्षण्यै नमः । [४] कर्षण्यै नमः । [५] क्षान्त्यै नमः ।
[६] शुद्धविदायै नमः । [७] शतानन्दायै नमः । [८] धृष्ट्यै नमः ।

ओं अंशुमत्यै नमः । ७९०
कलायै नमः ।
103 शिवायै नमः ।
स्तुतिप्रियायै नमः ।
ख्यात्यै नमः ।
जीवयन्त्यै नमः ।
पुनर्वसवे नमः ।
दीक्षायै नमः ।
भक्तार्तिहायै नमः ।
रक्षायै नमः ।
परीक्षायै नमः ॥ ८००॥
यज्ञसंभवायै नमः।
104 आर्द्रायै नमः ।
[१] पुष्करिण्यै नमः।
पुण्यायै नमः ।
गण्यायै नमः ।
दारिद्र्यभञ्जिन्यै नमः ।
धन्यायै नमः ।
मान्यायै नमः ।

ओं पद्मनेम्यै नमः ।
भार्गव्यै नमः । ८१०
[२] वंशवर्धनायै नमः ।
105 तीक्ष्णाप्रवृत्त्यै नमः ।
सत्कीर्त्यै नमः ।
[३] निषेव्यायै नमः ।
[४] अघविनाशिन्यै नमः ।
संज्ञायै नमः ।
निःसंशयायै नमः ।
पूर्वायै नमः ।
वनमालायै नमः ।
वसुन्धरायै नमः । ८२०
106 [५] पृथवे नमः ।
महोत्कटायै नमः ।
अहल्यायै नमः ।
मण्डलायै नमः ।
आश्रितमानदायै नमः ।
सर्वायै नमः ।
नित्योदितायै नमः ।

---

[१] पुष्करण्यै नमः । पुण्यगण्यायै नमः ।
[२] वंशवर्धिन्यै नमः । [३] निधिसेव्यायै नमः ।
[४] अघनाशिन्यै नमः । [५] पृथ्व्यै नमः ।

ओं उदारायै नमः ।
जृंभमाणायै नमः ।
महोदयायै नमः । ८३०
107 चन्द्रकान्तोदितायै नमः ।
[1] चन्द्रायै नमः ।
चतुरश्रायै नमः ।
मनोजवायै नमः ।
बालायै नमः ।
कुमार्यै नमः ।
युवत्यै नमः ।
करुणायै नमः ।
भक्तवत्सलायै नमः ।
108 मेदिन्यै नमः । ८४०
उपनिषन्मिश्रायै नमः ।
सुमवीरवे नमः ।
धनेश्वर्यै नमः ।
दुर्मर्षण्यै नमः ।
सुचरितायै नमः ।
बोधायै नमः ।
शोभायै नमः ।

ओं सुवर्चलायै नमः ।
109 यमुनायै नमः ।
[2] अक्षौहिण्यै नमः । ८५०
गङ्गायै नमः ।
मन्दाकिन्यै नमः ।
[3] अमरालयायै नमः ।
गोदायै नमः ।
गोदावर्यै नमः ।
चन्द्रभागायै नमः ।
कावेर्यै नमः ।
उदन्वत्यै नमः ।
110 सिनीवाल्यै नमः ।
कुहवे नमः । ८६०
राकायै नमः ।
[4] वारणायै नमः ।
[5] सिन्धुमत्यै नमः ।
अमायै नमः ।
वृद्ध्यै नमः ।
स्थित्यै नमः ।
ध्रुवायै नमः ।

---

[1] सूर्यायै नमः । [2] अक्षोहिण्यै नमः । [3] अमलाशयायै नमः ।
[4] वाराणस्यै नमः । [5] इन्दुमत्यै नमः ।

ओं बुद्ध्यै नमः ।
त्रिगुणायै नमः ।
गुणगह्वरायै नमः । ८७०
111 पूर्तये नमः ।
मायात्मिकायै नमः ।
स्फूर्तये नमः ।
व्याख्यायै नमः ।
सूत्रायै नमः ।
प्रजावल्यै नमः ।
विभूत्यै नमः ।
निष्कलायै नमः ।
[1] रंभायै नमः ।
रक्षायै नमः । ८८०
सुविमलायै नमः ।
क्षमायै नमः ।
112 प्राप्तयै नमः ।
वासन्तिकालेखायै नमः ।
भूरिबीजायै नमः ।
महागदायै नमः ।
अमोघायै नमः ।

ओं शान्तिदायै नमः ।
[2] स्तुत्यायै नमः ।
ज्ञानदायै नमः । ८९०
उत्कर्षिण्यै नमः ।
[3] शिखायै नमः ।
113 प्रकृत्यै नमः ।
[4] गोमत्यै नमः ।
लीलायै नमः ।
कमलायै नमः ।
कामदुहे नमः ।
विध्यै नमः ।
प्रज्ञायै नमः ।
रामायै नमः । ९००
परायै नमः ।
सन्ध्यायै नमः ।
सुभद्रायै नमः ।
सर्वमङ्गलायै नमः ।
114 नन्दायै नमः ।
भद्रायै नमः ।
जयायै नमः ।

---

[1] रम्यायै नमः (इति नामावल्यां) । [2] सत्यायै नमः ।
[3] भामिन्यै नमः । लीलायै नमः ।

ओं रिक्तायै नमः ।
तिथिपूर्णायै नमः ।
[1] अमृतंभरायै नमः । ९१०
काष्ठायै नमः ।
कामेश्वर्यै नमः ।
निष्ठायै नमः ।
काम्यायै नमः ।
[2] रम्यायै नमः ।
वरायै नमः ।
स्मृत्यै नमः ।
115 शङ्खिन्यै नमः ।
चक्रिण्यै नमः ।
श्यामायै नमः । ९२०
[3] समायै नमः ।
गोत्रायै नमः ।
रमायै नमः ।
[4] द्युतये नमः ।
शान्त्यै नमः ।

ओं दान्त्यै नमः ।
स्तुत्यै नमः ।
सिद्ध्यै नमः ।
[5] विरजायै नमः । ९३०
अत्युज्ज्वलायै नमः ।
अव्ययायै नमः ।
116 वाण्यै नमः ।
गौर्यै नमः ।
इन्दिरायै नमः ।
लक्ष्म्यै नमः ।
मेधायै नमः ।
श्रद्धायै नमः ।
[6] सरस्वत्यै नमः ।
स्वधायै नमः ।
स्वाहायै नमः । ९४०
रतिरुषायै नमः ।
[7] वसुविद्यायै नमः ।
धृत्यै नमः ।

---

[1] ऋतंभरायै नमः । [2] राम्यायै नमः । धरायै नमः ।
[3] सामायै नमः । [4] द्युत्यै नमः । शान्तिदायै नमः ।
[5] विराजायै नमः । [6] अप्रमायै नमः । अदितये नमः ।
[7] वसवे नमः । विद्यायै नमः ।............... सभायै नमः ।

ओं सहायै नमः ।
117 शिष्टायै नमः ।
[1] इष्टायै नमः ।
शुच्यै नमः ।
धात्र्यै नमः ।
[2] सुधायै नमः ।
रक्षोघ्न्यै नमः । ९५०
अजायै नमः ।
अमृतायै नमः ।
* रत्नावल्यै नमः ।
भारत्यै नमः ।
ईडायै नमः ।
[3] धीरधियै नमः ।
केवलायै नमः ।
आत्मदायै नमः ।
118 यस्यै नमः ।

ओं तस्यै नमः । ९६०
शुद्ध्यै नमः ।
[4] सोस्मितायै नमः ।
कस्यै नमः ।
नीलायै नमः ।
राधायै नमः ।
अमृतोद्भवायै नमः ।
[5] परधुर्यास्पदायै नमः ।
ह्रियै नमः ।
भुवे नमः ।
कामिन्यै नमः । ९७०
शोकनाशिन्यै नमः ।
119 [6] मायाकृत्यै नमः ।
रसघनायै नमः ।
नर्मदायै नमः ।
गोकुलाश्रयायै नमः ।

---

[1] अरिष्टायै नमः । [2] सुधारायै नमः । अक्षोण्यजायै नमः ।
[3] धीरायै नमः । धियै नमः ।
* रमण्यै नमः । एकायै नमः । शारदाम्बायै नमः ।
समेधायै नमः । आद्यायै नमः । शुभाक्षरायै नमः ।
[4] सास्मितायै नमः । [5] वरधुर्यायै नमः । स्वधायै नमः ।
[6] मायायै नमः । प्रील्यै नमः । असहनायै नमः ।

ओं अर्कप्रभायै नमः ।
[1] रथेभाश्वनिलयायै नमः ।
इन्दुप्रभायै नमः ।
अद्भुतायै नमः ।
120 श्रियै नमः । ९८०
कृशानुप्रभायै नमः ।
वज्रलंभनायै नमः ।
सर्वभूमिदायै नमः ।
भोगप्रियायै नमः ।
भोगवत्यै नमः ।
भोगीन्द्रशयनासनायै नमः ।
121 अश्वपूर्वायै नमः ।
रथमध्यायै नमः ।
[2] हस्तिनादप्रबोधिन्यै नमः ।
सर्वलक्षणलक्षण्यायै नमः ।
सर्वलोकप्रियङ्कर्यै नमः ।
122 ओं सर्वोत्कृष्टायै नमः ।
सर्वमय्यै नमः ।
भवभङ्गापहारिण्यै नमः ।
वेदान्तस्थायै नमः ।
ब्रह्मनीत्यै नमः ।
ज्योतिष्मत्यै नमः ।
अमृतावहायै नमः ।
123 भूताश्रयायै नमः ।
निराधारायै नमः ॥१०००
संहितायै नमः ।
सुगुणोत्तरायै नमः ।
सर्वातिशायिन्यै नमः ।
प्रीत्यै नमः ।
सर्वभूतास्थितायै नमः ।
द्विजायै नमः ।
सर्वमङ्गलमाङ्गल्यायै नमः ।
दृष्टादृष्टफलप्रदायै नमः॥१००८

---

[1] रसेभायै नमः । श्रीनिलयायै नमः ।
[2] हस्तिनाथप्रबोधिन्यै नमः ।

---

हरिः ओं

---

# Alphabetical Index of the 1008 Names of Sri Lakshmi.





| नाम. | श्लोक-संख्या. | नाम. | श्लोक-संख्या. |
|---|---|---|---|
| अंशुमती | 102 | अच्युतार्था | 93 |
| अंशुमालिनी | 101 | अजहत्कीर्तिः | 62 |
| अकलङ्का | 17 | अजा | 117 |
| अक्रिया | 23 | अजिता | 100 |
| अक्षया | 47 | अतीन्द्रिया | 59 |
| अक्षवर्तिनी | 85 | अत्युग्रा | 74 |
| *अक्षोण्यजा | 116 | अत्युज्ज्वला | 115 |
| अक्षोभ्या | 84 | अदितिः | 115 |
| अक्षौहिणी | 109 | अदृश्या | 68 |
| अखिलाधारा | 5 | अद्भुतकथा | 64 |
| अग्रतःस्थिता | 8 | अद्भुता | 119 |
| अग्राहिका | 26 | अघशमनी | 45 |
| अग्राह्या | 26 | अध्यात्मविद्या | 79 |
| अघविनाशिनी | 105 | अनघा | 37 |
| अचिन्त्यानन्तविभवा | 1 | अनन्तरूपा | 58 |
| अच्छिन्नसन्ताना | 76 | अनन्तश्रीः | 59 |

*इत्थमङ्कितानि नामानि श्रीरङ्गपाठे उपलभ्यन्ते, न त्वितरस्मिन् ।

ह



---

Printed at the Sri Brihadamba State Press, Pudukkottai, 500—17-8-37.

*Other works edited by the Translator:*
*(uniform with this volume).*

| | Rs. A. |
|---|---|
| **ABHAYA-PRADANA-SARA** of Sri Vedanta Desika ... ... | 0 8 |
| **SIDDHANTA-TRAYA-SANGRAHA** of Mm. Kapistalam Desikacarya ... ... | 0 8 |

*IN THE PRESS:*

**SILLARAI RAHASYANGAL Vol. II. (Sara-sara, etc.)**
of Sri Vedanta Desika. Ready 2 12

**ADHIKARANA-RATNA-MALA with Prakasa**
of Mm. Kapistalam Desikacarya. Ready 3 -

*Copies can be had of:—*

A. SRINIVASA RAGHAVAN, M.A.,
*Ambalpuram, PUDUKOTAH,*
*(Trichinopoly.*